अथबृहज्ज्योतिषार्णवे धर्मस्कंधे उपासनास्तबके
श्रीबटुकभैरवोपासना.
ध्यायः १२४ प्रारंभः

# ॥ अथाध्याय विषयानुक्रमणिका ॥

॥ इति विषयानुक्रमणिका ॥

॥ श्रीगणेशायनमः ॥ वृषवाहनविघ्नेशौहंसवाहंसरस्वतीं ॥ स्वेष्टंश्रीवटुकंनत्वापितरंव्येंकटंततः ॥ १॥ श्रीगौतमकुलोत्पन्नो ज्योतिर्विद्व्येंकटात्मजः ॥ हरिकृष्णः करोत्यत्रबटुकोपासनस्यच ॥ २॥ संग्रहमितिशेषः ॥ एतदुपासनायांवैसाधारणमपेक्षितं ॥ तत्सर्वंपूर्वमेवोक्तंविज्ञेयमिहमादरात् ॥ ३॥ पूर्वोक्तानांपदार्थानामत्रवक्ष्याम्यनुक्रमं ॥ लक्षणंगुरुशिष्याणांदीक्षाग्रहणनिर्णयः ॥ ४॥ पारायणविधानंचाभिषेकस्यविधानकं ॥ बीजानांलक्षणंचैवपुरश्चर्याविधिस्तथा ॥ ५॥ स्थानस्यनिर्णयश्चैवासनस्यचविनिर्णयः ॥ लक्षणंचैवमुद्राणांमालानिर्णयएवच ॥ ६॥ जपस्यलक्षणंचैवह्यजपाजपलक्षणं ॥ तांत्रिकंस्नानसंध्यादिनित्यकर्मनिरूपणं ॥ ७॥ भूशुद्धिद्वारपूजादिदेहरक्षानिरूपणं ॥ भूतशुद्धिश्चप्राणानांप्रतिष्ठाविधिरेवच ॥ ८॥ न्यासानांनिर्णयश्चैवमातृकान्यासनिर्णयः ॥ अनेकविधन्यासानांसप्रमाणंनिरूपणं ॥ ९॥ अर्चनंद्विविधंचैववामदक्षिणभेदतः ॥ वामेनवादक्षिणेनपूजनंतुयथारुचिः ॥ १०॥ पात्राणांलक्षणंचैवपात्रस्थापननिर्णयः ॥ शुद्धिः पंचमकाराणांयावामेपरिकीर्तिता ॥ ११॥ पात्राणांग्रहणंचैवतिरस्करणिपूजनं ॥ अंतर्यागविधानंचवैश्वदेवनिरूपणं ॥ १२॥ बहिर्यागविधानंचदेवतापीठनिर्णयः ॥ सर्वयंत्रप्रतिष्ठाचसापिभेदद्वयात्मिका ॥ १३॥ इष्टदेवस्थापनार्थंप्रथमंयंत्रपूजनं ॥ वश्याद्यनेककार्येषुयानियंत्राणिसंतिहि ॥ १४॥ तेषांचैवप्रतिष्ठाचयंत्रंसिद्धिकरंयतः ॥ अनेकविधपूजायाः भेदलक्षणवर्णनं ॥ १५॥ शंखघंटापूजनंचतन्महात्म्यनिरूपणं ॥ उपासनाप्रभेदेनभस्मरुद्राक्षधारणं ॥ १६॥ गोपीचंदनमाहात्म्यंतुलसीकाष्ठधारणं ॥ निर्णयश्चैवसंप्रोक्तोआवाहनविसर्जने ॥ १७॥ आसनस्यचध्यानस्यतथार्घ्यपाद्यनिर्णयः विधिराचमनीयस्यमधुपर्कस्यनिर्णयः ॥ १८॥ विधिः स्नानाभिषेकस्यजलाहरणनिर्णयः ॥ वस्त्रस्यचोपवीतस्यतथालंकरणस्यच ॥ १९॥ गंधाक्षतानांपुष्पाणांपत्राणांचविनिर्णयः ॥ धूपदीपविधानंचनैवेद्यस्यविनिर्णयः ॥ २०॥ फलतांबूलयोश्चैवदक्षिणायाश्चनिर्णयः ॥ आरार्तिकमंत्रपुष्पप्रदक्षिणाविनिर्णयः ॥ २१॥ प्रणामस्यप्रार्थनायास्तीर्थस्यचविनिर्णयः ॥ अंगपूजाऽऽवर्णपूजाबलिदानादिनिर्णयः ॥ २२॥ कुमारिकादिपूजायाः शक्तिपूजननिर्णयः ॥ स्तोत्रादिपठनंचैवतीर्थग्रहणनिर्णयः ॥ २३॥ होमस्यचविधानंवैकुंडमंडपलक्षणं ॥ तर्पणस्यमार्जन

स्यद्विजसंतर्पणस्यच ॥२४॥ विधानंचपृथक्प्रोक्तंनिर्णयश्चपृथक्पृथक् ॥ मंत्रस्यशीघ्रसिध्यर्थंविधिरुक्तोमयानृणां ॥२५॥ सर्वसि-
द्धिकरःसाक्षान्मंत्रसंस्कारपूर्वकः ॥ मूलिकाग्रहणेमंत्राः दिशांनियमएवच ॥२६॥ ऋतुमासर्क्षवाराणांतिथीनांनियमस्तथा ॥ अंगुलीनिर्ण-
यश्चैववंदाग्रहणनिर्णयः ॥२७॥ सिद्धार्यादिचक्रमार्गशोधनंसाधकेष्टयोः ॥ शापोद्धासेत्कीलनेचसूतकादिविनिर्णयः ॥ २८॥ नपुंस-
कादिभेदाश्चमंत्राणांयेप्रकीर्त्तिताः ॥ पुरश्चरणतःपूर्वकृत्यंयश्चांतिमेतथा ॥ २९॥ तत्सर्वमपिग्रंथेस्मिन्पूर्वमेवप्रकीर्त्तितं ॥ पृथक्पृथ-
क्तथाध्यायैः सर्वेषांनिर्णयःस्फुटः ॥ ३०॥ परिभाषाभिधेध्यायेकेषांचिन्निर्णयस्तथा ॥ कृतस्तदनुरोधेनप्रयोगःसिद्धिदोनृणां ॥३१॥
अदृष्टैवविधानंतुकृतश्चेष्भैवसंत्स्यति ॥ एषांसर्वोपासनेषुह्युपयोगोभवेत्किल ॥३२॥ तेषांसर्वपदार्थानांपूर्वमेवनिरूपणं ॥ कृतंतस्मा-
द्विशेषेणदृष्ट्वोपासनमारभेत् ॥ ३३॥ सर्वेशाक्ताद्विजाःप्रोक्ताः नशैवानचवैष्णवाः ॥ आदिदेवीमुपासंतेगायत्रींवेदमातरं ॥ ३४॥
तस्मादादौप्रयत्नेनगायत्रींप्रयुतंजपेत् ॥ पटलंपद्धतीवर्मतथानामसहस्रकं ॥ ३५॥ स्तोत्राणिचेतिपंचांगंदेवतोपासनेस्मृतं बुधैरि-
तिशेषःइतिपंचांगानि अथैषांव्यवस्था कवचंदेवतागात्रंपटलंदेवताशिरः ॥३६॥ पद्धतिर्देवहस्तौतुमुखंसाहस्रकंस्मृतं ॥ स्तोत्राणिदेवतापा-
दौपंचांङ्गंपंचभिःस्मृतं ॥३७॥ जपोहोमस्तर्पणंचमार्जनंविप्रभोजनं ॥ आराधनंपंचविधंदेवतानांप्रकीर्त्तितं ॥३८॥ पंचांगैः सहितं-
त्वेतद्दशांगंकथ्यतेबुधैः ॥ हृदयंदीपदानंचस्तवराजादिकंतथा ॥३९॥ मालामंत्रस्तथाकल्पःसर्वमेतद्ब्रवीम्यहं ॥ उपासनाश-
रांगेषुयाप्रोक्तापद्धतिः पुरा ॥४०॥ इष्टदेवार्चनार्थंवैद्वितीयांगंचतत्स्मृतं ॥ तस्योपयोगिकंह्येतत्सर्वंपूर्वमयोदितं ॥४१॥ सविस्तरं
चतद्दृष्ट्वाकार्यापद्धतिरुत्तमा ॥ सनिर्णयांचसर्वत्रलिखामियदिपद्धतिं ॥४२॥ तदाग्रंथोमहानेवभवेत्तस्माच्चपूर्वतः ॥ लिखित्वानि-
र्णयंपश्चात्कवचादिकमत्रवै ॥४३॥ प्रवक्ष्यामिविशेषेणग्रंथानालोक्ययत्नतः ॥ तस्माद्यत्नपरोभूयात्स्वस्यसिध्यैनसंशयः ॥
॥४४॥ ॥ इतिश्रीहरिकृष्णविनिर्मितेबृहज्ज्योतिषार्णवेधर्मस्कंधेउपासनास्तबकेश्रीबटुकभैरवोपासनाध्याये-
उपोध्घातप्रकरणंप्रथमं ॥१॥ ॥अथश्रीबटुकभैरवकवचं ॥ उक्तंचभैरवतंत्रे ॥ ॥ महादेव उवाच ॥

प्रीयतां भैरवोदेवोनमोवै भैरवायच ॥ देवेशी देहरक्षार्थं कारणंकथ्यतांध्रुवं ॥१॥ प्रीयंते साधकायेन विनास्मशान भूमिषु ॥ रणेषुचाति-
घोरेषु महामृत्युभयेषुच ॥२॥ शृंगीसलिलवज्रेपुज्वरादिव्याधिवन्हिषु ॥ देव्युवाच ॥ कथयामिशृणुप्राज्ञ बटुककवचंशुभं ॥३
॥ गोपनीयप्रयत्नेन मातृकाजारजोयथा ॥ ॐ अस्यश्रीबटुकभैरवकवचस्य आनंद भैरवऋषिः त्रिष्टुपृछंदः श्रीबटुकभैरवो देव-
ताबंबीजं ह्रीं शक्तिः ॐ बटुकायेतिकीलकं ममाभीष्टसिध्यर्थैंजपे विनियोगः ॐ सहस्त्रारेमहापद्मेकर्पूर धवलेगुरुः ॥ ४ ॥
पांतु मांबटुको देवो भैरवः सर्वकर्मसु ॥ पूर्वस्यामसितांगोमांदिशिरक्षतुसर्वदा ॥ ५ ॥ आग्नेयांचरुरुः पातु दक्षिणे चंडभैरवः ॥ नै-
ऋत्यांक्रोधनः पातुउन्मत्तः पातु पश्चिमे ॥ ६ ॥ वायव्यांमांकपालीच नित्यंपायात्सुरेश्वरः ॥ भीषणो भैरवः पातु उत्तरस्यांतु सर्वदा
॥ संहार भैरवः पायादीशान्यांचमहेश्वरः ॥ ऊर्ध्वंपातु विधाताच पाताले नंदकोविभुः ॥८॥ सद्योजातस्तुमांपायात्सर्वतो देवसेवितः ॥
वामदेवोवनांतेच वने ऽ घोरस्तथा ऽ वतु ॥ ९ ॥ जलेतत्पुरुषः पातुस्थलेईशानएवच ॥ डाकिनीपुत्रकः पातु पुत्रान्मेसर्वतः प्रभुः ॥
॥१०॥ हाकिनीपुत्रकः पातुदारांस्तुलाकिनीसुतः ॥ पातुशाकिनिकापुत्रः सैन्यंवैकाल भैरवः ॥ ११ ॥ मालिनीपुत्रकः पातु पशून्श्वा-
नुगजांस्तथा ॥ महाकालो ऽ वतुक्षेत्रंश्रियंमेसर्वतोगिरा ॥१२॥ वाद्यंवाद्यप्रियः पातुभैरवोनित्यसंपदा ॥ एतत्कवचमीशान तव-
स्नेहात्प्रकाशितं ॥१३॥ नारव्येयंनरलोकेषुसारभूतंसुरप्रियं ॥ यस्मैकस्मैनदातव्यंकवचंसुरदुर्लभं ॥१४॥ नदेयंपरशिष्येभ्यो
कृपणेभ्यश्चशंकर ॥ योददातिनिशिद्धेभ्यः सर्वंभ्रष्टोभवेत्धवं ॥ १५ ॥ अनेनकवचेनैवरक्षांकृत्वाविचक्षणः ॥ विचरन्यत्रकुत्रापिन
विघ्नैः परिभूयसे ॥ १६ ॥ मंत्रेणरक्षतेयोगी कवचंरक्षकंयतः ॥ तस्मात्सर्वप्रयत्नेन दुर्लभंपापचेतसां ॥१७॥ भूर्जेरंभात्वचीवापिलि-
खित्वाविधिवत्प्रभो ॥ कुंकुमेनाष्टगंधेन गोरोच्चनैश्चकेसरैः ॥१८॥ धारयेत्पाठयेद्वापिसंपठेद्वापिनित्यशः ॥ संप्राप्नोतिफलंसर्वंनात्रका-
र्याविचारणा ॥१९॥ सततंपटयते यत्रतत्र भैरवसांस्थितः ॥ नशक्नोमिप्रभावंवैकवचस्यास्य वर्णितुं ॥ २० ॥ नमोभैरव देवाय सर्व भूताय
वैनमः ॥ नमस्त्रैलोक्यनाथायनाथनाथायवैनमः ॥ २१ ॥ ॥ इतिरु० बृ० ध० उ० श्रीबटुकभैरवोपासनाध्याये भैरव तंत्रे-

देविरहस्योक्तं श्रीबटुकभैरवकवचनिरूपणंनामप्रकरणं द्वितीयं ॥ २ ॥ ॥ ६५ ॥ ॥ अथश्रीबटुकभैरवब्रह्मकवचं ॥ ॥ उक्तंचरुद्रयामले ॥ श्रीदेव्युवाच ॥ ॥ भगवत्सर्ववेत्तात्वं देवानांप्रीतिदायकं ॥ भैरवंकवचंब्रूहियदिचास्तिकृपामयि ॥ १ ॥ प्राणत्यागंकरिष्यामियदिनोकथयिष्यति ॥ सत्यंसत्यंपुनःसत्यंसत्यमेवनसंशयः ॥ २ ॥ इत्थंदेव्याःवचःश्रुत्वाप्रहस्यातिस्वयंप्रभुः ॥ उवाचवचनंतत्रदेवदेवोमहेश्वरः ॥ ३ ॥ ॥ ईश्वरोवाच ॥ बटुककवचंदिव्यंशृणुयत्प्राणवल्लभे ॥ चंडिकातंत्रसर्वस्वंबटुकस्यविशेषतः ॥ ४ ॥ तत्रमंत्राद्यक्षरंतुवासुदेवस्वरूपकं ॥ शंखवर्णद्वयोब्रह्माबटुकंचंद्रशेखरः ॥ ५ ॥ आपदुद्धारणोदेवः भैरवः परिकीर्तितः ॥ प्रवक्ष्यामिसमासेनचतुर्वर्गप्रसिद्धये ॥ ६ ॥ प्रणवंकामदंविद्याल्लज्जाबीजंचसिद्धिदं ॥ बटुकायेतिविज्ञेयंमहापातकनाशनं ॥ ७ ॥ आपदुद्धारणायेतित्वापदुद्धारणंनृणां ॥ कुरुद्वयंमहेशानिमोहनेपरिकीर्तितं ॥ ८ ॥ बटुकायमहेशानिस्तंभनेपरिकीर्त्तितं ॥ लज्जाबीजंतथाविद्यान्मुक्तिदंपरिकीर्तितं ॥ ९ ॥ द्वाविंशत्यक्षरोमंत्रः क्रमेणजगदीश्वरी ॥ ॐ अस्यश्रीबटुकभैरवब्रह्मकवचस्यभैरवऋषिः अनुष्टुप्छंदः श्रीबटुकभैरवोदेवता ममबटुकभैरवप्रसादसिध्यर्थेजपेविनियोगः ॥ ॐ पातुशिरसि नित्यंपातुह्रींकंठदेशके ॥ १० ॥ बटुकायपातुनाभौचापदुद्धारणायच ॥ कुरुद्वयंलिंगमूलेत्वाधारेबटुकायच ॥ ११ ॥ सर्वदापातुह्रींबीजंबाह्वोर्युगलमेवच ॥ षडंगसहितोदेवोनित्यंरक्षतुभैरवः ॥ १२ ॥ ॐ ह्रींबटुकायसततंसर्वांगंममसर्वदा ॐ ह्रींपादौमहाकालःपातु वीरासनोहृदी ॥ १३ ॥ ॐ ह्रींकालःशिरःपातुकंठदेशेतुभैरवः ॥ गणराट्पातुजिह्वायामष्टभिःशक्तिभिःसह ॥ १४ ॥ ॐ ह्रींदंडपाणिर्गुह्यमूलेभैरवीसहितस्तथा ॐ ह्रींविश्वनाथःसदापातुसर्वांगंममसर्वदा ॥ १५ ॥ ॐ ह्रींअन्नपूर्णासदापातुचांसौरक्षतुचंडिका ॥ असितांगःशिरःपातुललाटंरुरुभैरवः ॥ १६ ॥ चंडभैरवःपातुवक्त्रंकंठंश्रीक्रोधभैरवः उन्मत्तभैरवःपातुहृदयंममसर्वदा ॥ १७ ॥ नाभिदेशेकपालीचलिंगेभीषणभैरवः ॥ संहारभैरवःपातुमूलाधारंचसर्वदा ॥ १८ ॥ बाहुयुग्मंसदापातुभैरवोममकेवलं ॥ हंसबीजंहृदीपातुसोहंरक्षतुपाणयोः ॥ १९ ॥ प्राणापानेसमानंचउदानंव्यानमेवच ॥ रक्षंतुद्वारमूलेचदशदिक्षुसमंततः

॥२०॥ प्रणवंपातुसर्वांगंलज्जाबीजंमहाभये ॥ इतिश्रीब्रह्मकवचंभैरवस्यप्रकीर्त्तितम् ॥२१॥ चतुर्वर्गप्रदंनित्यंस्वयंदेवप्रकाशितं ॥ यःपठेच्छृणुयान्नित्यंधार्यतेकवचोत्तमं ॥२२॥ सदानंदमयोभूत्वालभतेपरमंपदं ॥यइदंकवचंदेवीचिंतयेन्मन्सुरवोदितं ॥२३॥ कोटिजन्मार्जितंपापंविनश्यतिचतत्क्षणात् ॥ जलमध्येऽग्निमध्येवादुर्ग्रहेशत्रुसंकटे ॥२४॥ कवचस्मरणाद्देवीसर्वत्रविजयीभवेत् ॥ भक्तियुक्तेनमनसाकवचंपूजयेद्यदि ॥२५॥ कामतुल्यस्तुनारीणांरिपुणांचयमोपमः ॥ तस्यपादांबुजद्वंद्वंराज्ञांमुकुटभूषणं ॥२६॥ तस्यभूतिंविलोक्यैवकुबेरोपितिरस्कृतः ॥ अस्यविज्ञानमात्रेणमंत्रसिद्धिर्नसंशयः ॥२७॥ इदंकवचमज्ञात्वायोजपेद्बटुकंनरः ॥ नचाप्नोतिफलंतस्यपरंनरकमाप्नुयात् ॥२८॥ मन्वंतरत्रयंस्थित्वातिर्यग्योनिषुजायते ॥ इहलोकेमहारोगीदरिद्रेणातिपीडितः ॥२९॥ शत्रूणांवशगोभूत्वाकरपात्रीभवेज्जडः ॥ देयंपुत्रायशिष्यायशांतायप्रियवादिने ॥३०॥ कार्पण्यरहितायालंबटुभक्तिरतायच ॥ योपराग्येप्रदातावैतस्यतस्यातिसत्वरं ॥३१॥ आयुर्विद्यायशोधर्मबलंचैवनसंशयः ॥ इतितेकथितंदेवीगोपनीयंस्वयोनिवत् ॥ ३२ ॥ ॥इतिश्री हः बृः घः उः श्रीबटुकोपासनाध्यायेरुद्रयामलोक्तं श्रीबटुकभैरवब्रह्मकवचनिरूपणंनामप्रकरणंतृतीयं ॥३॥ ॥ श्लो० ॥

॥ अथश्रीबटुकभैरवकवचं ॥ ॥ देव्युवाच ॥ ॥ देवदेवजगन्नाथत्रिनाथश्रीत्रिलोचन ॥ भवप्रसादात्भगवन्भैरवस्यमहात्मनः ॥ कवचंश्रोतुमिच्छामित्वत्स्नेहातिशयादहं ॥ ॥ शिवउवाच ॥ ॥ प्राणिनांरक्षणार्थंचब्रवीमिसुमुखेगुणान् ॥२॥ वर्मणोभैरवस्यास्यशिवब्रह्माऋषिःस्मृतः ॥ छंदोनुष्टुप्तथादेवोभैरवोबटुकात्मजः ॥३॥ ऐश्वर्यस्याभिवृध्यर्थमिष्टार्थंचनियुज्यते ॥४॥ शूलखड्गडमरुलसत्करंसव्यहस्तमपरोकरोज्वलं ॥ संततंहृदिभजामिभैरवंस्वाधिरूढमहाभीष्टसिद्धये ॥ ५॥ दिग्वाससंकमलपत्रविशालनेत्रं ॥ भस्मांगरागमभयंप्रभुमादिदेवं ॥ ध्यायामितेबटुकनाथमहर्निशंमे ॥ सर्वार्थसिद्धिमतुलांकृपयादिशंतं ॥ ६॥ एवंध्यात्वातुदेवेशंबटुकाख्यंमहाबलं ॥ उच्चरेत्कवचंपश्चादेवताभीष्टसिद्धिदं ॥७॥ शिरोमेभैरवःपातुभालंपुरनिषूदनः ॥ दृशोपातुत्रिनेत्रोमेश्रवणंनीलकंठकः ॥८॥ दिग्वासामेपातुकंठंनासिकामगकन्यभाक् ॥ ओष्ठौत्रिपुरघातीमेजिह्वांपातुकपालधृक् ॥९॥

दंतान्पातुक्रतुध्वंसीचिबुकंभूतवासकः ॥ कपालीपातुमेग्रीवांस्कंधौपातुगजांतकः ॥ १० ॥ भुजौमेपातुकौमारोहृदयंक्षेत्रपालकः ॥
अभिरूमेंस्तनौपातुवक्षः पातुमहेश्वरः ॥ ११ ॥ कुक्षौमेपातुसंहर्तानाभिंमेषण्मुखप्रियः ॥ भूतनाथः कटिंगुह्यंपातुजटाधरं ॥ १२ ॥ उरू
पातुवृषारूढोजानुनीभूतभावनः ॥ स्मशानवासीमेपातुपातुसर्वांगमीश्वरः ॥ १३ ॥ यइदंकवचंदेविपठेत्प्रयतमानसः ॥ तस्यैश्वर्या
भिवृध्यर्थमिष्टान्नंचददाम्यहं ॥ १४ ॥ रोगार्त्तोमुच्यतेरोगात्पुत्रार्थीलभतेसुतान् ॥ जपित्वाश्रद्धयाकन्या आयुष्मंतंपतिंलभेत् ॥ १५
॥ विद्याविनयसंपन्नंसुकुलिनंसुरूपिणं ॥ जपित्वाविधवानारीवैधव्यंनाप्नुयात्क्वचित् ॥ १६ ॥ जपित्वाकवचंप्रातर्मुच्यतेनात्रसंश
यः ॥ नास्तितस्यापमृत्युश्चकालमृत्युः कदाचन ॥ १७ ॥ इहलोकेसुखंभुत्काापुत्रपौत्रैः सुबांधवैः ॥ अंतेकैलासमाविश्यममपादतलंव्रजेत्
॥ १८ ॥ तस्मात्सर्वप्रयत्नेनजपेन्नित्यमतंद्रितः ॥ १९ ॥ येभक्तियुक्ताकवचंपठंतितेवैकुलंमिधिनिनोवसंति ॥ तेजाधिकंविंशतिसंख्ययादि
नेकैलासमाप्नोतिममप्रसादात् ॥ २० ॥ एतत्तेकथितंदेवियन्मांत्वंपरिपृच्छसि ॥ त्वत्स्नेहातिशयादुक्तंकवचंभैरवात्मकं ॥ ॥ २१ ॥ ॥
इतिश्रीह॰ बृ॰ ध॰ उपा॰ स्तवकेश्रीबटुकभैरवोपाध्यायेश्रीबटुकभैरवकवचनिरूपणंनामप्रकरणंचतुर्थं ॥ ४ ॥ श्लो॰
॥ ॥ अथचतुर्थश्रीबटुकभैरवपंजरकवचं ॥ ॥ उक्तंचशक्तिरहस्ये ॥ ॥ पार्वत्युवाच ॥ ॥ देवदेवमहादेवसंसार
प्रियकारक ॥ पंजरंबटुकस्यास्यकथनियंममप्रभो ॥ १ ॥ श्रीशिवउवाच ॥ ॥ पूर्वंभस्मासुरत्रासात्भयविह्वलतःस्वयं ॥ पठ-
नाद्देवमेप्राणारक्षितापरमेश्वरी ॥ २ ॥ सर्वदुष्टविनाशायसर्वरोगनिवारणं ॥ दुःखशांतिकरंदेविह्यल्पमृत्युभयापहं ॥ ३ ॥ राज्ञांवश्यकरं
चैवत्रैलोक्यविजयप्रदं ॥ सर्वलोकेषुपूज्यश्चलक्ष्मीस्तस्यगृहेस्थिरा ॥ ४ ॥ अनुष्टानंकृतंदेविपूजनंचदिनेदिने ॥ विनापंजरपाठे
नतत्सर्वंनिष्फलंभवेत् ॥ ५ ॥ अस्यश्रीबटुकभैरवपंजरकवचमंत्रस्यकालाग्निरुद्रऋषिः ॥ अनुष्टुपछंदः ॥ बटुकभैरवोदेवता ॥
ह्रांबीजं । ॐ भैरवीवल्लभाशक्तिः । ॐ दंडपाणयेनमः कीलकं । ममसकलकामनासिध्यर्थेजपेविनियोगः ॥ ७ ॥ ॐ ह्रां प्राच्यां
डमरुहस्तोरक्तवर्णोमहाबलः ॥ प्रत्यक्षमहमीशानबटुकायनमोनमः ॥ ८ ॥ ॐ ह्रींदंडधारीदक्षिणेचपश्चिमेखड्गधारिणे ॥ ॐ

ह्रुं घंटावादी मूर्तिरुत्तरस्यांदिशितथा ॥ ९ ॥ ॐ ह्रैं अग्निरूपं ह्याग्नेयां नैर्ऋत्यांचदिगंबरः ॥ ॐ ह्रौंसर्वभूतस्थो वायव्येभूतानांहि-
तकारकः ॥ १० ॥ ॐ ह्रःश्चाष्टसिद्धिश्चइशानेसर्वसिद्धिकरःपरः ॥ प्रत्यक्षमहमीशानबटुकायनमोनमः ॥ ११ ॥ ॐ ह्रांह्रींह्रुं ह्रैं ह्रौंह्रः
स्वाहाउर्द्धरवेचरीणंन्यसेत् ॥ रुद्ररूपस्तुपातालेबटुकायनमोनमः ॥ १२ ॥ ॐ ह्रींबटुकायमूर्ध्निललाटेभीमरूपिणं ॥ आपदुद्धरणंनेत्रेमु-
खेचबटुकंन्यसेत् ॥ १३ ॥ कुरुकुरुसर्वसिद्धिर्देहेगेहेव्यवस्थितः ॥ बटुकायह्रींसर्वदेहेविश्वस्यसर्वतोदिशि ॥ १४ ॥ आपदुद्धारकःपातुह्यापा-
दतलमस्तकं ॥ ह्सक्षमलवरयुं पातुपूर्वेदंडहस्तस्तुदक्षिणे ॥ १५ ॥ ह्सक्षमलवरयुं नैर्ऋत्येह्सक्षमलवरयुंपश्चिमेवतु ॥ सर्वभूतस्थ वाय-
व्येह्सक्षमलवरयुंघंटावादिनउत्तरे ॥ १६ ॥ हंसःसोहंतइशानेचाष्टसिद्धिकरःपरः ॥ क्षंक्षेत्रपालउर्ध्वेतुपातालेशिवसन्निभः ॥ १७ ॥ एवं-
दशदिशोरक्षेद्बटुकायनमोनमः ॥ इतितेकथितंदेविह्रींश्रींक्लींऐंसदावतु ॥ १८ ॥ ॐ क्रेंह्रुंफट्चसर्वत्रत्रैलोक्येविजयीभवेत् ॥ क्ष्मींऐं श्रींलं
पृथिव्यांच आकाशेहंममावतु ॥ १९ ॥ स्रौंप्रौंज्रौंॐयंवायव्यांरंरंतेजरूपिणं ॥ ॐ कंखंगंघंङंबटुकंचंछंजंझंञं कपालिनं ॥ २० ॥
टंठंडंढंणंक्षेत्रेशंतंथंदंधंनंउमाप्रियं ॥ पंफंबंभंमं ममरक्षयंरंलं भैरवोत्तमं ॥ २१ ॥ वंशंषंसं आदिनाथं लंक्षंवै क्षेत्रपालकं ॥ एवंपंजरमाख्या-
तंसर्वसिद्धिकरंभवेत् ॥ २२ ॥ दुःखदारिद्रशमनंरक्षकंसर्वतोदिशः ॥ आवश्यंसर्वतोवश्यंसर्वबीजैश्चसंपुटं ॥ २३ ॥ सर्वरोगहरंदिव्यंसर्वत्रसु-
खमाप्नुयात् ॥ एवंरहस्यमाख्यातंदेवानामपिदुर्लभं ॥ २४ ॥ वज्रपंजरनामेदंयेभृएवंतिवरानने ॥ आयुरारोग्यमैश्वर्यंकीर्तिलाभोसुखंजयः
॥ २५ ॥ लक्ष्मीमनोरमाबुद्धिस्तेषांगेहेव्यवस्थिता ॥ सुशीलायसुदांतायगुरुभक्तिपरायच ॥ २६ ॥ तस्यैशीघ्रंचदातव्यमन्यथानकदाचन ॥
गोपनीयंप्रयत्नेनसर्वगोप्यमयंभवेत् ॥ २७ ॥ यस्मैकस्मैनदातव्यंनदातव्यंकदाचन ॥ राज्यंदेयंशिरोदेयंनदेयंभैरवाक्षरं ॥ २८ ॥ एककालंद्विका-
लंवात्रिकालंपठतेनरः ॥ सर्वपापविनिर्मुक्तोशिवेनसहमोदते ॥ २९ ॥ ॥ इतिश्रीह॰ बृ॰ ध॰ उपा॰ स्तबके श्रीबटुकभैरवोपा॰ ध्याये
शक्तिरहस्योक्त श्रीबटुक भैरवपंजरकवचनिरूपणंनामप्रकरणंपंचमं ॥ ५ ॥ ॥ श्लो॰ ॥ ॥ अथश्रीबटुकभैरवबका-
रादिसहस्रनामस्तोत्रं ॥ ॥ उक्तंचभैरवयामलतंत्रे ॥ ॥ श्रीपार्वत्युवाच ॥ ॥ यद्गुह्यंपरमाख्यातंत्रिषुलोकेषुदुर्लभं ॥ को-

टिग्रंथेषुगोप्यंयत्सूचितंनप्रकाशितं ॥१॥ सर्वसंपत्प्रदंपुण्यंसर्वापत्क्षयकारकं ॥ तदहंश्रोतुमिच्छामिबटुकस्यमहात्मनः ॥२॥ नाम्नासह-
स्रंदिव्यानांबकाराख्यंमहात्मनां ॥ कृपयावदवेशायद्यहंतववल्लभा ॥३॥ ॥ श्रीमहादेवउवाच ॥ सूचितंमेत्वयिस्नेहादप्रकाश्यंकुले
श्वरी ॥ नाम्नांसहस्रंकोटीनांसारतःसारमुत्तमं ॥४॥ नवक्तव्यंत्वयादेवीचिन्तस्थंममपार्वती ॥ अप्रकाश्यतमंदेवीप्राणेभ्योयेपरेप्रिये
॥५॥ ॥ ब्रह्मभैरवोवाच ॥ ॥ इत्युक्त्वाभगवान्देवोबोध्यस्वात्मानमात्मना ॥ पुलकांचितसर्वांगोनचकिंचिदुवाचह ॥६॥ ॥
श्रीपार्वत्युवाच ॥ ॥ देवदेवमहादेवभक्तानुग्रहकारक ॥ नाम्नांसहस्रंदिव्यानांबकाराख्यंशुभप्रदं ॥७॥ गोप्यंतुसर्वगोप्यानां
वदमेपरमेश्वर ॥ अप्रकाश्यंकुलेशानयद्यहंप्राणवल्लभा ॥८॥ ॥ श्रीमहादेवोवाच ॥ ॥ शृणुदेवीमहागुह्यंरहस्यंपरमाद्भुतं ॥
नकस्यचिन्मयाख्यातमद्यापिप्राणवल्लभे ॥९॥ सुखसंपत्प्रदंदेवीधनधान्यजयप्रदं ॥ भूतग्रहपिशाचानांस्मरणादेवनाशनं ॥१०॥
कृत्याद्रोहादिशमनंबालग्रहनिवारणं ॥ चतुर्वर्गश्चतुर्भद्रप्रदमेतन्नसंशयः ॥११॥ बटुकस्येहनामानिप्रयुतान्यर्बुदानिच ॥ सारात्सारत-
रंशेषंसहस्रंशृणुयत्नतः ॥१२॥ सुधासिंधुमणिद्वीपेपारिजातवनावृते ॥ प्रक्षालयतुभूमध्येप्रेतभूतस्थमीश्वरं ॥१३॥ विपरीतरताशा-
क्तंकौमारंविलसत्हृदि ॥ चतुर्बाहुंत्रिनयनंमंजनाद्रिसमप्रभं ॥१४॥ जटाजूटधरंदेवंशशांककृतशेखरं ॥ भुजंगमेखलायुक्तंदि-
ग्वाससमनाकुलं ॥१५॥ डमरुंचकपालंचवरंशूलंक्रमात्करैः ॥ दधतंचकटैर्दंतैःकरालवदनंविभुं ॥१६॥ ध्यात्वैवंसाधकस्तुष्टोजपेत्सि-
द्धिमवाप्नुयात् ॥ ॥ ब्रह्मभैरवोवाच ॥ ॥ नामसहस्रंदिव्यानांबटुकस्यमहात्मनः ॥१७॥ वक्ष्यामितत्वतःसम्यक्सारेभ्यःसारमुत्तमं
॥ सर्वमंगलमांगल्यंसर्वोपद्रवनाशनं ॥१८॥ सर्वपापहरंपुण्यंसाधकानांसुखप्रदं ॥ आयुःपुष्टिःश्रीकरंचपुत्रपौत्रादिवर्धनं ॥१९॥
बटुकस्तोत्रमुख्यस्यमहादेवऋषिःस्मृतः ॥ महाबटुकभैरवोदेवतापरिकीर्तिता ॥२०॥ छंदोविराट्सर्वकार्येसिध्यर्थेसाधकस्यतु ॥
बटुकस्यचतुर्थ्यंतंविनियोगःप्रकीर्तितः ॥२१॥ महादेवेनयत्प्रोक्तंपार्वत्यैसर्वमंगलं ॥ सर्वशत्रुक्षयकरंसर्वापद्विनिवारणं ॥२२॥ सर्व
वेदांगमुख्यंचसारात्सारांशमुत्तमं ॥ देवदेवेनयत्प्रोक्तंहिमाचलसुतांप्रति ॥२३॥ अत्युग्रकृतिभूतांगींकारुण्यात्प्रीतिचेतसा ॥ त-

द्देवतेप्रवक्ष्यामिगुरुभक्तायसांप्रतं ॥२४॥ अतियत्नान्मयाप्राप्तं दक्षिणाक्रमयोगतः ॥ तदहं संप्रवक्ष्यामियच्चुतं परमाद्भुतं ॥२५॥ कु-
लिनायचशांतायभक्तायचसुबुद्धये ॥ धनमानप्रदात्रेचदेवार्चनरतायच ॥२६॥ देवतामानत्यन्क्तायधर्मबुद्धिपरायच ॥ वदान्यायचयो
ग्यायप्रणयायाद्रतात्मने ॥२७॥ गोत्रप्रदेयमाज्ञप्तमितिदेव्यापुरोमम ॥ अतस्तुभ्यंप्रवक्ष्यामिकरुणार्द्रमहात्मने ॥२८॥ बटुकस्यचदे-
वस्यमदोन्मत्तस्यशूलिनः ॥ स्तोत्रंसहस्त्रनामाख्यंबकाराख्यंसुसंयुतं ॥२९॥ यस्यस्मरणमात्रेणश्रवणेनप्रयत्नतः ॥ पठनात्पाठनाद्वा-
पिसर्वसिद्धिमुपालभेत् ॥३०॥ यत्रास्थितमिदंस्तोत्रंतत्रश्रीसर्वतोमुखी ॥ तत्रसर्वत्रविजयंभवत्येवनसंशयः ॥३१॥ तत्रलोकवशेसर्वे
सर्वेषांभैरवस्यतु ॥ उपमन्योबहुत्वेकंनवाच्यंयस्यकस्यचित् ॥३२॥ गुरुसंतोषयत्नेनपठितव्यंसमाहितैः ॥३३॥ ॥ब्रह्मभैरवो-
वाच ॥ ॥ ॐ अस्यश्रीबटुकभैरवस्यबकाराख्यसहस्त्रनामस्तोत्रस्य ॥ महादेवऋषिः ॥ अनुष्टुप्छंदः ॥ श्रीबटुकभैरवोदेवता ॥
बंबीजं ॥ ह्रींशक्तिः ॥ क्लींकीलकं ॥ ममाभीष्टसिध्यर्थेपाठेविनियोगः ॥ महादेवऋषयेनमः शिरसि ॥ अनुष्टुप्छंदसेनमः मुखे
॥श्रीबटुकभैरवदेवतायैनमः हृदये ॥ बंबीजायनमः गुह्ये ॥ ह्रींशक्तयेनमः पादयोः ॥ क्लींकीलकायनमः नाभौ ॥ विनियोगायनमः
सर्वांगे ॥ ॥ करषडंगन्यासः॥ ॐ बांईशानायनमः अंगु॰॥ ॐ बींतत्पुरुषायनमः तर्जं॰ ॥ ॐ बुं अघोरायनमः मध्यं॰ ॥ ॐ बैंवामदेवाय
नमः अना॰॥ ॐ बौंसद्योजातायनमः कनिं॰ ॥ ॐ बः रौद्रायनमः करतलकरपृष्ठाभ्यांनमः ॥ ॥ एवंहृदयादि ॥ ॥ ध्यानंतुकामना
विषयेणध्यात्वासात्विकराजसतामसंच ॥ ॐ बंबंबंवटुकोवीरोबांबांबांबटुकस्तथा ॥ बींबींबींबटुकोवीरोबूंबूंबूंबटुकस्तथा ॥३४॥
बैंबैंबैंबटुकःक्रोध्योबौंबौंबौंबटुकस्तथा ॥ बः बः बः बटुकोरावोब्रः ब्रः ब्रः शब्दतत्परः ॥३५॥ बंयतितबिंबध्वारोबंह्रदिःबंप्रीतिकार-
कः ॥ वज्रायुधोवज्रहस्तोवज्रायुधभयावहः॥३६॥ वज्रायुधांगसंपृष्टोवज्रायुधपदःसदा ॥ वज्रायुधस्तुतोवज्रीबुधराधवरस्मृतः
॥३७॥ वज्रायुधसुखकरः वज्रायुधसुखप्रदः ॥ वज्रायुधोवज्रश्रेष्टोवज्रायुधगतिःस्मृतः ॥३८॥ वज्रायुधोप्राणत्रातोवज्रायुधसुखप्रदः
वज्रायुधोवज्रश्रेष्टोवज्रायुधगतिःस्मृतः ॥३९॥ वज्रायुधोप्राणत्रातोवज्रायुधपदःस्मृतः ॥ वज्रहस्तोवज्रपादोवज्रदंष्ट्राग्रजिह्वकः

॥३९॥ वज्रमुखोवज्रकुलोवज्रस्छापींगलस्मृतः ॥ वज्रायुधप्रियसखोवज्रायुधोवज्रप्रीतिहा ॥४०॥ वज्रायुधप्राणित्रातोवज्रायु-
धवरप्रदः ॥ वज्रायुधातिशमनोवज्रायुधविधारकः ॥४१॥ वज्रायुधप्राणदातावज्रायुधपरायणः ॥ वज्रविज्ञानसंभावोवज्रसेव्यो-
वरप्रदः ॥४२॥ वज्रसेव्यप्रियः प्राणोवज्रसेव्यप्रियः सदा ॥ वज्रप्रियोवज्रमयोवज्रतेजप्रवर्त्तकः ॥४३॥ वज्रनिधिः वज्रप्राणोवज्र
सेव्यवरप्रदः ॥ वज्राधीशोवज्रधरोबंधुपुष्पजवोधवः ॥ ४४ ॥ बंधुपुष्पप्रतीकाशोबंधुद्रुमसमागमः ॥ बंधुपुष्पश्चबंधुमंत्रः बंधुपुष्प-
जयोद्भवः ॥४५॥ बंधुपुष्पप्रपूज्यश्चबंधुपुष्पस्वरूपकः ॥ बंधुपुष्पप्रतीकाशोबंधुकारुण्यविग्रहः ॥४६॥ बंधुकारुणनीलोभूः बंधुक
पुष्पवासिनः ॥ बंधूककुसुमस्निग्धोबंधूकसुमनोत्सवः ॥४७॥ बंधूकपुष्पकिरणोबंधूकपुष्पपालकः ॥ बंधूकसुमनोध्येयोबंधूक
सुमनप्रभः ॥४९ ॥ बंधूकसुमनज्ञाताबंधूककुसुमाधरः ॥ बंधूककुसुमोल्लासोबंधूकपुष्पवर्षिणी ॥४९॥ बंधूककुसुमानंदोबं-
धूकवनवासिनः ॥ बंधूककुसुमोत्साहोबंधूकपुष्पस्वरूपकः ॥५०॥ बंधूककुसुमोन्मादोबंधूकपुष्पधारिणः ॥ बंधूककुसुमाराधो
बंधूककुसुमोद्भवः ॥५१॥ बंधूककुसुमप्राणोबंधूककुसुमार्चितः ॥ बंधूकपुष्पवटिकोबंधूकपुष्पतर्पितः ॥ ५२॥ बंधूकपुष्पमु-
कुटोबंधूककुसुमप्रियः ॥ बंधूककुसुमद्भ्योबंधूकपुष्पविग्रहः ॥५३॥ बंधूककुसुमप्रख्योबंधूककुसुमात्मकः ॥ बंधूककुसु-
मप्राज्ञोबंधूकपुष्पवर्त्तिकः ॥५४॥ बंधूकपुष्पसर्वस्योबंधुकपट्टपूरकः ॥ बंधूकपदसर्वस्योबंधूकपट्टपूरकः ॥ ५५ ॥ बकुल
पुष्पसंपूज्योबकुलपुष्पहोमदः ॥बकुलपुष्पमध्यस्छोबकुलफलभोजनः ॥५६॥ बकुलकाननांतरस्छोबकुलावलपाशकः ॥
बकुलाचलराध्यश्चबगलामुखिपुत्रकः ॥५७॥ बकुलकुसुमप्रीतोबकुलकुसुमार्चितः ॥ बकुलपुष्पनिलयोबकुलपुष्परासिनः ॥
५८॥ बकुलकुसुमज्ञातः बकुलपुष्पधारकः ॥ बकुलकुसुमोल्लासोबकुलपुष्पवर्तिनः ॥५९॥ बकुलकुसुमानंदोबकुलवनवा-
सिनः ॥बकुलकुसुमोत्साहोबकुलपुष्परूपकः ॥६०॥ बकुलकुसुमोन्मादोबकुलपुष्पधारकः ॥ बकुलकुसुमाराध्योबकुलकुसु-
मोद्भवः ॥६१॥ बकुलकुसुमप्राणोबकुलकुसुमार्चितः ॥ बकुलपुष्पखचितोबकुलपुष्पतर्पितः ॥६२॥ बकुलपुष्पमुकुटोबकु-

लकुसुमप्रियः ॥ बकुलकुसुमोदर्पोबकुलपुष्पविग्रहः ॥६३॥ बकुलपुष्पमालीचबकुलकुस्कमात्मकः ॥ बकुलकुसुमप्राज्ञोबकु-
लषुष्पवर्तकः ॥६४॥ बकुलपुष्पधारीचबकुलनिंदकांतकः ॥ बकुलप्रदसर्वस्यः बदरीफलभोजनः ॥६५॥ बद्रिकाश्रमवास-
श्चबद्रिकाचलपुंडकः ॥ वसुदोवसुधाराध्योवसुदानपरायणः ॥६६॥ बहुनेत्रोबहुलास्योबहुहस्तोबहुप्रदः ॥बह्वाननोबहुक-
र्णोबहुपापविनाशनः ॥६७॥ वल्लभोवल्लभाप्रीतोवल्लभाबहुरूपकः ॥बहुगुणश्चसर्वोधः बहुगुणपरायणः ॥६९॥ बहुगुणश्चसं-
प्रीतोबहुगुणप्रकाशकः ॥बहुगुणसुसंपूज्योबहुगुणस्वरूपकः ॥६९॥ बहुगुणसुसंहृष्टोबहुगुणप्रधारणः ॥बकारवर्णसर्वांगो
बकाररूपधारणः ॥७०॥ बकारिहस्तिभूषाढ्योबकारमुकुटास्थितः ॥ बकारहृदयाराध्योबकाराभरणाकृतः ॥७१॥ बकारणव
धारुष्टोबंबीजतोषितःसदा ॥ वारुणीजयसंतुष्टोवारुणीपानसुंदरः ॥७२॥ वारुणीचुंबनानंदोवारुणीमंडलेस्थितः ॥ वारुणी-
गतमम्यश्चवारुणीप्रेमचंद्रिकः ॥७३॥ वारुणीमुखमध्यस्थोवारुणीगणमंडितः ॥वारुणीमंडलानंतोवारुणीकुंडरूपिणः ॥
॥७४॥ वारुणीमनसाराध्योवारुणीतत्वतः प्रियः ॥ वारुणीमोदरचिकोवारुणीमोदवासिनः ॥७५॥ वारुणीभोगरसिकोवारु-
णीकुचमंडनः ॥ वारुणीयोगमार्गस्थोवारुणीयोगरूपिणः ॥७६॥ वारुणीपूजकःप्राणोवारुणीनिंदकांतकः ॥ वारुणीप्रा-
णसन्मान्योवारुणीदृष्टिगोचरः ॥७७॥ वारुणीकेशसंमार्जोवारुणीनाभिमध्यगः ॥ वारुणीमोदसंप्रीतोवारुणीमोदरूपकः ॥
॥७८॥वारुणीहस्यसंप्रीतोवारुणीध्यानतत्परः ॥ वारुणीवाक्यरसिकोवारुणीकुंडपूजकः ॥७९॥ वारुणीपाननंदोभूवारुणी
रतितत्परः ॥ वारुणीतांडवानंदनायकोवारुणार्णवः ॥८०॥ वारुणीकुंडमध्यस्थोवारुणीकुंडसुंदरः ॥ वारुणीशास्त्रसंप्रीतो
वारुणीमध्यसुंदरः ॥८१॥ वारुणीभोगरसिकोवारुणीमृतदीर्घिकाः ॥ वारुणीसौरव्यदः प्रीतोवारुणीचंद्रसुंदरः ॥८२॥
बिल्वोबिल्वकरोबिल्ल्वोबिल्वपत्रप्रपूजकः ॥ बिल्ववृक्षसमागम्योबिल्वपत्रस्थबिल्वभूः ॥८३॥ बिल्वपुष्पप्रियःप्राणोबिल्वपु-
ष्पप्रमोदकः ॥ बिल्वपुष्पप्रपूज्योथबिल्ल्वपुष्पस्वरूपकः ॥८४॥ बिल्वपत्रमहोदश्चबिल्वफलप्रभोजनः ॥ बिल्ल्वप्रियोबिल्ल्वम-

योबिल्ल्ववृक्षनिवासिनः ॥८५॥ बिल्ल्ववृद्धिकरोबिल्ल्वप्रियोबिल्ल्वनिषेविनः ॥ बिल्ल्वपत्रस्थसर्वांगोबिल्ल्ववृक्षप्रपालकः ॥८६॥
विभावसुसमंतेजोविभावसुसमागमः ॥ विभावसुमंदगतिर्विभावसुरिवामतिः ॥८७॥ विभावसुप्रपूज्यश्चविभावसुप्रपूजंकः ॥
बिंबाधरोबिंबरूपोविश्वविद्याविनोदनः ॥८८॥ विगम्यावेदकर्ताचविधिकर्ताविधिप्रभः ॥ विधिविध्यातावितदोविधिगम्योविधिवरः
॥८९॥ विधिसपत्रमूर्तिश्चविधिशापविमोचकः ॥ विधिशास्त्रोविधिप्राज्ञोविदुषोगुरुदेवता ॥ ९०॥ विक्रधिक्रमसंचारोविधिशास्त्र
विचारणः ॥ विविधिक्रमसंचारोविविदृक्विविधिक्रमः ॥ ९१ ॥ विधुपुत्रप्रियसखोविधिपुत्रमवावहः ॥ विधिपुत्रपरित्राताविधिपुत्रवर
प्रदः ॥ ९२ ॥ विधुविज्ञानविभवोविधुशीर्षेषुशोभनः ॥ विश्वमित्रसुसंपन्नोविश्वामित्रवरप्रदः ॥९३॥ विश्वामित्रमूर्तिधारी विश्वा-
मित्रस्वरूपकः ॥ विश्वामित्रगुरुश्रेष्ठोविश्वामित्रप्रभंजकः ॥९४ ॥ विश्वामित्रयोगप्रियोविश्वामित्रनुतिप्रियः ॥ विश्वामित्रपरिज्ञा-
तोविश्वामित्रयोगक्षमः ॥९५॥ विश्वामित्रार्तिशमनोविश्वामित्रार्तिनाशनः ॥ विषदोविषदाचारोविषपानसदारतः ॥ ९६॥ विमलो-
विमलांगश्चविमलाचारतत्परः ॥ विश्वेश्वरोविश्वराजोविघ्नसंघविनाशनः ॥ ९७॥ विनायकोविघ्नराजोविघ्नविच्छेदनाशनः ॥
बिंबाधरोबिंबरुचिर्विश्वविद्याविनोदनः ॥ ९८॥ वीणाधरोवीणानाथोवीणावाद्यपरायणः ॥ वीरमुख्योवीरप्रियोवीरस्थायोगएः सदा ॥
॥ ९९॥ वीरमंत्रोवीरश्रेष्ठोवीरस्त्रीगमनोपरः ॥ बुद्धिबुध्याकृतिधरोबुद्धिशायीबुधप्रियः ॥१००॥ बुद्धिपूर्णोबुद्धिधरोबुद्धिभाबुद्धिदूर-
गः ॥बुद्धिर्बुद्धवपुर्बुद्धिः शरीरोबुद्धिमंडितः ॥१॥ बुद्धिप्रभुश्चबुद्धिभूर्बुद्धिकृतचराचरः ॥बुद्धिप्रणवसंतुष्टोबुद्धिहीनपराङ्मुखः ॥
२॥ बुद्धिभृद्बुद्धिहृत्कर्ताबुद्धिश्रेष्ठोबुद्धिप्रभुः ॥ बुधेशोबुधसंतुष्टोबुधैकसदनंसदा ॥३॥ बुद्धिवांश्चैवबुद्धिश्चबुद्धिवान्बुद्धिभाज-
नः ॥बुद्धिप्रणितपादाग्रोबुद्धिगीतबुधौजसः ॥४॥ बुद्धिवान्बुद्धिसंपन्नोबुत्ध्यानंदितमानसः ॥ बुद्धिमार्गप्रणेताचबुद्धिसंचारचा-
तुरः ॥५॥ बुद्धिगौणोबुत्ध्याधारोबुद्धिसंबुद्धिचेतनः ॥ बुद्धिरुद्बुद्धिहृन्नित्यंबुत्ध्याग्रोबुद्धिपारदः ॥६॥ बुद्धिवृद्धिप्रचारोभू-
कृबुत्ध्याबुद्धिविवेकवित् ॥ बुत्ध्याकारोबुद्धिकरोबुद्धिप्राणविवर्द्धनः ॥ ७॥ बुद्धिगूढधरोबुद्धिर्बुद्धिसंचारचेष्टितः ॥ बुद्धिदक्षि-

एताहार्दोबुद्धिलक्षणतत्त्ववित् ॥८॥ बुध्याचारीबुद्धिहारीबुद्धिसुखप्रदायकः ॥ बुद्धिलसूकृतसंचारीबुद्धितत्वविवेकवित् ॥९॥ बुद्धिगर्वधरोबुद्धिर्बुद्धिगर्वपराभवः ॥ बुध्याधीनोबुद्धितमोबुद्धिलक्षणलालसः ॥१०॥ बुद्धिगौरवदाताचबुद्धिदाताबुद्धिप्रदः ॥ बुध्योक्तबुद्धिहर्ताचबुद्धिभूर्बुद्धिवर्धनः ॥११॥ बुद्धिरुद्योगकर्ताचबुद्धिदाताबुद्ध्युक्तकरः ॥ बुध्याचारोबौद्धरूपोबौद्धावतारधृक्सदा ॥१२॥ बूंबूंबः बीजस्वरूपोबूंक्षूंहूं मुकुटेश्वरः ॥ बूंक्लींह्रूंचंडकर्ताचलः बूंक्लींहुंफट्स्वाहा ॥१३॥ वेदज्ञोवेदकर्ताचवेदपाठविशारदः ॥ वेदप्रियोवेदमयोवेदविद्याविधारकः ॥१४॥ वेदपाठकरोवेदवाख्यानकरणक्षमः ॥ वेदांगोवेदरूपश्चवेदमंत्रस्वरूपवान् ॥१५॥ वेदवंद्योवेदप्राणोवेदपागोविदाश्रयः ॥ वेदांतगीतरचितोवेदगीनप्रवाहकः ॥१६॥ वेदधर्मसंपन्नोथवेदधर्मनिकृंतनः ॥ वैद्योवैद्यपतिर्वैद्योवैद्यनायकसुंदरः ॥१७॥ वैद्यराजोथवैद्यज्ञोवैद्यराजनमस्कृतः ॥ वैद्यप्रियोवैद्यप्रीतिवैद्यत्राणगमोध्यतः ॥१८॥ वैद्यनीतिर्निर्गुणोद्योवेवैद्यानांप्रतिपालकः ॥ वैद्यहर्तावैद्यकरोवैद्योवैद्यपतिप्रियः ॥१९॥ वैद्यराजशिरसिजोवैद्यराजाशिषप्रदः ॥ वैद्यराजार्चितपदोवैद्यराजनमस्कृतः ॥२०॥ वैद्यराजोवैद्यवेद्योवैद्यराजभयावहः ॥ बोंबोंबः बीजरूपश्चबौंबौंबौंबीजरूपकः ॥२१॥ वैदेहीवैनकोवैद्योवैद्याचारप्रधारकः ॥ वैश्याचारोवैश्यश्रेष्ठोवैश्यानांकुलदेवता ॥२२॥ वीरभद्रोथवीरेशोवीरेंद्रोवंदितःपदः ॥ वीरवंद्योवीरप्राणोवीरबाहुविराश्रयः ॥२३॥ वीरदैत्यप्राणहारीवीरदैत्यापहारकः ॥ वीरार्णवहरोवीरोवीराणांप्राणवल्लभः ॥२४॥ वीरधर्मसदाराध्योवीरधर्मनिकेतनः ॥ वीरदैत्यप्राणत्राताविरदैत्यबलप्रदः ॥२५॥ वीरगर्जितसंपूर्णोवीरब्रह्मांडगर्जितः ॥ वीरपुत्रपरित्रातावीरपुत्रवरप्रदः ॥२६॥ वीरपुत्रप्रियसखोवीरपुत्रभयापहः ॥ वीरपुत्राभिशमनोवीरपुत्राहिनाशकः ॥२७॥ वीरपुत्रप्राणत्रातावीरभक्तिपरायणः ॥ वीरविज्ञानविभवोवीरबाहुवरप्रदः ॥२८॥ वीरबाहुस्तुतोवीरबहुशःशापहारकः ॥ वीरबाहुप्रियोवीरबहुगौरववर्द्धनः ॥२९॥ वीरबाहुपरित्रातावीरबाहुसुखप्रदः ॥ विश्वप्रभुर्विश्वश्रेष्ठोथविश्वक्षेत्रकरस्तथा ॥३०॥ बालार्कवर्णोबालोथबालार्कतेजसःपरः ॥ बालोबालप्रियोबालोबालक्रीडापरायणः ॥३१॥ वामनोवाग्भवाकारोवाचालोवाक्पतिःप्रियः ॥ वाचामगोचरोवांतोवीणावेणुधरोपरः ॥३२॥

वाग्भवोवाक्यतिःश्रेष्ठोवाग्देवीप्रियनंदनः ॥ वाग्देवीहृदयानंदोवाग्देवीगर्भसम्भवः ॥ ३३ ॥ वाक्सिद्धोवाक्यतिप्राणोवाग्हृदोवाक्स्वरूपकः ॥ बाणप्रचारोबाणेशोबाणसारविवेकवित् ॥ ३४ ॥ बाणभूर्बाणसंपन्नोबाणानंदितमानसः ॥ बाणसंधानचतुरोबाणसंशयसुंदरः ॥ ३५ ॥ बाणयेष्टाबाणधरोबाणसंचितचेतसः ॥ बाणरुद्धानभृन्नित्यंबाणज्ञोबाणपादकः ॥ ३६ ॥ बाणाकारोबाणकरोबाणप्रियविवर्द्धनः ॥ बाणगूढधरोबाणबाधसंधानचेष्टितः ॥ ३७ ॥ बाणदोबाणसौन्हार्दोबाणलांच्छनतत्ववित् ॥ वाणीसंस्कृतसंचारोवाणीतत्वविवेचकः ॥ ३८ ॥ वरदोवरदः स्वस्छोवरदोभयदायकः ॥ वरदद्रणयः प्राहुर्वसिष्ठाश्रमसेविनः ॥ ३९ ॥ वसिष्ठोवसिष्ठाराध्योवसिष्ठानंददायकः ॥ वसिष्ठाभीष्ठवरदोवसिष्ठाभयदायकः ॥ ४० ॥ वसिष्ठप्राणवशकोवशिष्टगणधारकः ॥ वामनोवल्लभोवंद्योवनमालाविभूषणः ॥ ४१ ॥ वनस्छोवनजोवैद्योवनराजोवनाश्रयः ॥ वनेचरोवनाधीशोवानरीवनसेवितः ॥ ४२ ॥ वानरोवानराधीशोवानरशत्रुनाशनः ॥ वानप्रस्थाश्रमकृतोवानप्रस्छयोगप्रदः ॥ ४३ ॥ ब्रम्हयोनिर्बृहद्योनिर्विश्वयोनिर्विवेकवान् ॥ ब्रह्मविद्ब्रह्मभावश्चब्रह्मर्षिर्ब्राह्मणप्रियः ॥ ४४ ॥ ब्रह्मदोब्राह्मणात्माचब्रह्मविद्याप्रकाशकः ॥ ब्रह्मचारीब्रह्मवेत्ताब्राम्हणोब्राह्मणोत्तमः ॥ ४५ ॥ ब्रह्मपुत्रविधेयात्माब्रह्मसूत्रार्थनिर्णयः ॥ ब्रह्मगोरवदाताचब्रह्मांडोब्रह्मांडेश्वरः ॥ ४६ ॥ व्योमगम्योव्योमशानोव्योमसंभवसुंदरः ॥ व्योमगम्योव्योमधारोब्रह्मगीतप्रचारकः ॥ ४७ ॥ व्योमब्रह्मोपगतिश्चव्योमज्ञोव्योमपारदः ॥ व्योमचरोव्योमरूपोव्योमकेशोतिशोभनः ॥ ४८ ॥ व्यालाधिपःव्यालशानोव्यालस्छोव्यालगःसदा ॥ व्यालमुखोव्यालकर्णोव्यालोयतनशोभनः ॥ ४९ ॥ व्यालशायीव्यालश्रेष्ठोव्याघ्राजिनप्रधारकः ॥ वृषाकपीवृषेयात्मावृषारूढोवृषोदरः ॥ ५० ॥ वृषहावृषभोश्रेष्ठोवृषपर्वोवृषोदरः ॥ वृषगम्योवृषेशानोवृषगतिर्बृहच्छिरवः ॥ ५१ ॥ ब्रह्मधर्मप्रचारोथबृहच्छत्रप्रपाठकः ॥ बृहद्गतिर्बृहत्कर्णोबृहद्दंतालिशोभनः ॥ ५२ ॥ विश्वात्माविश्वकर्माचविश्वेशापरमोहितः ॥ विश्वाश्रयोविश्वव्यापीविश्वबंधुर्विश्वक्रतुः ॥ ५३ ॥ विश्वकर्ताविश्वभर्ताविश्वेशोविश्वभूषणः ॥ विभावसुश्चसंपन्नोविश्वावसुसमागमः ॥ ५४ ॥ विश्वावसुप्रपूज्यश्चविश्वावसुस्वरूपकः ॥ विंध्याचलनिवासश्चविंध्याचलप्रकारणः ॥ ५५ ॥ विद्रुमवर्णोविद्रुमोथविद्रुमाचासरारजः ॥ बंह्रींह्रोंबीजराजेशोबोबोकोबोन्द

कांतकः ॥५६॥ वांबांबूंबीजवर्णाढ्योवांबांबूंह्रुंवषट्स्वाहानमः ॥वंकारभैरवोराध्योवकाराक्षरशोभनः ॥५७॥ वंवंकूंकूटसंसेव्योवंवंकपा-
लिकेसरः ॥वंवंतांडवचंडाख्योवंवंभूतेशभैरवः ॥५८॥ वंह्रुंस्वाहाघोररूपवंह्रुंक्रुंकामदायकः ॥वंह्रींह्रांकालांतकश्चैववंह्लंलंतान
वर्द्धनः ॥५९॥ वंह्रींह्रुंचंडनिर्नाशोवंह्रींह्रुंवीरभैरवः ॥वौषट्रूपोधाविश्वरोवंह्रंह्रुंविश्वरूपकः ॥६०॥ वुंक्रुंह्रुंउठःरूपोथवुंक्रुंह्रुंफट्
वंनमः ॥वुंह्रुंस्वयंभुभूषाढ्योवुंह्रींह्रुंलिंगरूपकः ॥६१॥वुंभैरववुंयोगीशोवुंवुंमानवसुंदरः ॥वुंह्रुंविज्ञानभैरवोवुंह्रींह्रुंममृतानंदः
॥६२॥ वुंह्रुंह्रींसिद्धभैरवःवुंअसितांगभैरवः ॥वुंह्रींह्रंरुरुभैरवःवुंह्रींह्रूंचंडभैरवः॥ ६३॥ वुंह्रींह्रुंक्रोधभैरवोवुंह्रूंउन्मत्तभैरवः ॥ वुं-
ह्रुंअघोरभैरवःवुंह्रींह्रुंभीतिभैरवः ॥६४॥ वुंह्रुंसंहृतिभैरवःवुंह्रूंसंहारभैरवः ॥ वुंह्रुंअघोरभैरवःवुंह्रुंविमलभैरवः ॥६५॥ वुंह्रींह्रुं-
ज्ञानदश्चैववुंह्रींह्रुंमहामोदकः ॥ वुंह्रींह्रुंवह्निभैरवःवुंमहारिक्तभैरवः ॥ ६६ ॥ वुंह्रुंमहायोगनरःवुंमहामोहनाशनः वुंह्रींह्रुंयोगकिं-
न्नरःवुंह्रुंकामविनाशकः ॥ वुंह्रुंह्रांकामविदाढ्योवुंह्रींह्रुंमन्मथेश्वरः ॥ ६७॥ वुंह्रुंधनपतेश्वरःवुंह्रुंवैकुंठनायकः ॥ वुंह्रींह्रुंफट्स्वरू-
पोथवुंह्रींह्रुंकालफट्तथा ॥६८॥ वुंह्रुंह्रींफट्शिर्षोथवुंह्रुंफट्नेत्रत्रयोयवौषट् ॥ वुंह्रुंधूमेशभैरवोवुंह्रुंनटनागेश्वरः ॥६९॥ वुंह्रुंफट्भ-
वानीश्वरोवुंह्रूंफट्घोरभैरवः ॥ वुंह्रींह्रूंघोषवाणाख्योवुंह्रींह्रुंवादिभैरवः ॥७०॥ वुंह्रींह्रुंदिक्भैरवोथवुंह्रींह्रुंघंटाभैरवः ॥ वुंह्रींह्रुं
नमनानंदोवुंह्रींह्रुंनेत्रपदेश्वरः ॥७१॥ वुंह्रुंत्रिपुरभैरवः वुंह्रुंत्रैलोक्यभैरवः ॥वुंह्रींह्रुंस्तंभनेश्वरोवुंह्रींह्रुंगणसागरः ॥७२॥ वुंह्रीं-
ह्रुंशक्तिदायिन्योवुंह्रींह्रुंबीजगर्भभृत् ॥ वुंह्रींह्रुंश्रीकंठेश्वरोवुंह्रींह्रूंश्रीकंठेश्वरः ॥७३॥ वुंह्रींह्रुंसूत्रभैरवः वुंह्रींह्रुंरक्तभैरवः ॥वुंह्रीं-
ह्रुंत्रिमूर्तिश्वरोवुंह्रींह्रुंअर्थेशभैरवः ॥७४॥वुंह्रुंसद्योजातेश्वरोवुंह्रुंअनुग्रहेश्वरः॥ वुंह्रींह्रुंअक्रूरेश्वरोव्रुंह्रींह्रुंचंडिकेश्वरः ॥७५॥
व्रुंह्रुंपंचत्वकेश्वरोव्रुंह्रुंशिवोत्तमेश्वरः ॥व्रुंह्रींह्रुंदारुकेश्वरोव्रुंह्रुंसकनेत्रेश्वरः ॥७६॥वुंह्रींह्रुंचतुराननेश्वरोव्रुंह्रींह्रुंलांगुलीश्वरः ॥
व्रुंह्रुंअर्धनारीश्वरोव्रुंह्रुंउमाकांतेश्वरः ॥७७॥ व्रुंह्रींह्रुंत्रिमूर्तिश्वरोवुंह्रींह्रुंफट्गणेश्वरः ॥ व्रुंह्रुंमयोबहुगुणोव्रुंह्रींह्रुंपाठतत्परः ॥७८
॥वुंह्रुंफट्वुंह्रुंफट्व्रुंह्रुंफट्व्रुंह्रुंफट्व्रुंह्रुंफट्व्रुंह्रुंफट्स्वाहारूपकः ॥७९॥ व्रुंह्रुंफट्व्रुंह्रुंफट्वषट्व्रुंह्रुंफट्वौषट्व्रुंॐ जपसंतुष्टोयकं

ॐ जपपरायणः ॥ ८० ॥ ब्रुंन्हुंफट् सिद्धिविद्याचब्रुंन्हुंफट् लक्ष्मीश्वरः ॥ ब्रुंन्हुंफट् वसुधामीनोब्रुंन्हुंफट् सुराधिपाइनः ॥ ८१ ॥ ब्रुंन्हुंफट् शारदापुत्रोब्रुंन्हुंफट् माहेश्वरीपुत्रः ॥ ब्रुंन्हुंफट् राक्षसीपुत्रोब्रुंन्हुंफट् वरेशीपुत्रकः ॥ ८२ ॥ ब्रुंन्हुंफट् यक्षिणीपुत्रोब्रुंन्हुंफट् कुलेशीपुत्रः ॥ ब्रुं-न्हुंफट् ज्ञानपुत्रोब्रुंन्हुंफट् शाकिनीपुत्रः ॥ ८३ ॥ ब्रुंन्हींतीक्ष्णदंष्ट्रापुत्रोब्रुंन्हींतीक्ष्णाजिव्हापुत्रः ॥ ब्रुंन्हुंफट् हाकिनीपुत्रोब्रुंन्हुंफट् शाकिनीपुत्रः ॥ ८४ ॥ ब्रुंन्हुंफट् डाकिनीपुत्रोब्रुंन्हुंफट् लाकिनीपुत्रः ॥ ब्रुंन्हुंफट् मोहिनीपुत्रोब्रुंन्हुंफट् ठागिनीपुत्रः ॥ ८५ ॥ ब्रुंन्हुंफट् स्तंभिनीपुत्रो-ब्रुंन्हुंफट् जृंभिणीपुत्रः ॥ ब्रुंन्हुंफट् उर्वशीपुत्रोब्रुंन्हुंफट् मेनकापुत्रः ॥ ८६ ॥ ब्रुंन्हुंफट् रंभापुत्रोब्रुंन्हुंफट् घृताचीपुत्रः ॥ ब्रुंन्हुं उर्ध्वमुखीपुत्रो ब्रुंन्हुंऊर्ध्वकेशीपुत्रः ॥ ८७ ॥ ब्रुंन्हुंफट् तुडिपुत्रोथब्रुंन्हुंफट् लोलाक्षीपुत्रः ॥ ब्रुंन्हुं ललजिव्हापुत्रोब्रुंन्हुंफट् रक्ताक्षीपुत्रः ॥ ८८ ॥ ब्रुंन्हुंफट् ग-दिनीपुत्रोब्रुंन्हुंफट् डंशिनीपुत्रः ॥ ब्रुंन्हुंफट् दडिनीपुत्रोब्रुंन्हुंफट् ध्वजिनीपुत्रः ॥ ८९ ॥ ब्रुंन्हुंफट् खड्गिनीपुत्रोब्रुंन्हुंफट् शंखिनीपुत्रः ॥ ब्रुं-न्हुंफट् कंपिनीपुत्रोब्रुंन्हुंफट् हासिनीपुत्रः ॥ ९० ॥ ब्रुंन्हींफट् तारिणीपुत्रोब्रुंन्हुंफट् पुरायिपुत्रः ॥ ब्रुंन्हुंफट् कालीपुत्रोब्रुंन्हुंफट् कपालीपुत्रः ॥ ९१ ॥ ब्रुंन्हुंफट् तारिणीपुत्रोब्रुंन्हुंफट् त्रिपुरापुत्रः ॥ ब्रुंन्हुंफट् षोडशीपुत्रोब्रुंन्हुंफट् भुवनेशीपुत्रः ॥ ९२ ॥ ब्रुंन्हुंफट् शन्वेशीपुत्रो-ब्रुंन्हुंफट् धुमावतीपुत्रः ॥ ब्रुंन्हुंफट् बगलापुत्रोब्रुंन्हुंफट् मातंगीपुत्रः ॥ ९३ ॥ ब्रुंन्हुंफट् बगलापुत्रोब्रुंन्हुंफट् त्रिकुटापुत्रः ॥ ब्रुंन्हुंफट् अच-लापुत्रोब्रुंन्हुंफट् भूधरापुत्रः ॥ ९४ ॥ ब्रुंन्हुंफट् कल्मषापुत्रोब्रुंन्हुंफट् कल्पासिपुत्रः ॥ ब्रुंन्हुंफट् भोगस्छापुत्रो ब्रुंन्हुंफट् भाविकापुत्रः ॥ ९५ ॥ ब्रुंन्हुंफट् विजयापुत्रोब्रुंन्हुंफट् कुरूपापुत्रः ॥ ब्रुंन्हुंफट् ईश्वरीपुत्रोब्रुंन्हुंफट् रेवतीपुत्रः ॥ ९६ ॥ ब्रुंन्हुंफट् त्रिनेत्रापुत्रोब्रुंन्हुंफट् कुरूपापुत्रः ॥ ब्रुंन्हुंफट् स्वरूपापुत्रोब्रुंन्हुंफट् त्रिपुरापुत्रः ॥ ९७ ॥ ब्रुंन्हुंफट् चर्चिकापुत्रोब्रुंन्हुंफट् अंबिकापुत्रः ॥ ब्रुंन्हुंफट् वेदसवीपुत्रोब्रुंन्हुंफट् कौ-शिकीपुत्रः ॥ ९८ ॥ ब्रुंन्हुंफट् वाराहीपुत्रोब्रुंन्हुंफट् माहेश्वरीपुत्रः ॥ ब्रुंन्हुंफट् भद्रापुत्रोब्रुंन्हुंफट् धृतीपुत्रः ॥ ९९ ॥ ब्रुंन्हुंफट् शांतिपुत्रोथ ब्रुंन्हींन्हुंफट् शिवापुत्रः ॥ ब्रुंन्हुंफट् क्षमापुत्रोब्रुंन्हुंफट् सिद्धिपुत्रकः ॥ २०० ॥ ब्रुंन्हुंफट् तुष्टिपुत्रोब्रुंन्हुंफट् सिद्धिपुत्रकः ॥ ब्रुंन्हुंफट् रतिपुत्रोथब्रुंन्हींन्हुंफट् श्रीपुत्रकः ॥ १ ॥ ब्रुंन्हुंफट् दिसापुत्रोब्रुंन्हुंफट् कांतिपुत्रकः ॥ ब्रुंन्हुंफट् लक्ष्मीपुत्रोब्रुंन्हुंफट् श्रीपुत्रकः ॥ २ ॥

भ्रुंह्रुंफट्रतिपुत्रोथभ्रुंह्रुंफट्ब्रह्मपुत्रकः ॥ भ्रुंह्रुंफट्कर्दमापुत्रोभ्रुंह्रुंफट्आर्यापुत्रकः ॥ ३ ॥ भ्रुंह्रुंफट्सतिपुत्रोथभ्रुंह्रुंफट्रुंधतिपुत्रः
॥ भ्रुंह्रुंफट्गंगापुत्रोथभ्रुंह्रुंफट्गोमतीपुत्रः ॥ ४ ॥ भ्रुंह्रुंफट्रेवापुत्रोथभ्रुंह्रुंफट्यमुनापुत्रः ॥ भ्रुंह्रुंफट्भद्रापुत्रोथभ्रुंह्रुंफट् अत्रेयीपुत्रकः
॥ ५ ॥ भ्रुंह्रुंफट्कौशिकीपुत्रोभ्रुंह्रुंफट्भोगवतीसुतः ॥ भ्रुंह्रुंबाहुदापुत्रश्चभ्रुंह्रुंकर्मनाशापुत्रकः ॥ ६ ॥ भ्रुंह्रुंकूष्मांडीपुत्रश्चभ्रुंह्रुंह्रीं
राक्षसीसुतः ॥ भ्रुंह्रुंदानवीपुत्रश्चभ्रुंह्रुंपिशाचीपुत्रस्तथा ॥ ७ ॥ वन्हिगर्भोवन्हिनेत्रोवन्हितेजगतीतिच ॥ वन्हिदृष्टिर्वन्हिशांतोवन्हि
रूपश्चवन्हिभूः ॥ ८ ॥ वायुगर्भोवायुगतिर्वायुवाहनगपरः ॥ बाधाकारोबीजरूपोवाधाकाशपरायणः ॥ ९ ॥ वायुविक्रमसंचारीवायु
दुर्गतिविक्रमः ॥ वन्हिह्रूंफट् विघ्नेश्वरोवन्हिह्रूंफट्विप्रोत्तमः ॥ १० ॥ बंबंएकदंतभैरवोबंबंविघ्नकृद्भैरवः ॥ वंमोदकभैरवोथवंप्रमोदभै-
रवस्तथा ॥ ११ ॥ वंदुर्मुखभैरवोवंसुमुखभैरवेशः ॥ वंप्रमोदभैरवोथवंशोनाभैरवस्तथा ॥ १२ ॥ वंउन्मत्तभैरवोथवंमत्तभैरवस्तथा ॥ वं-
खरमुखभैरवोवैवंलंबोदरभैरवः ॥ १३ ॥ वंवंअमोदभैरवोवैवंमुंडभैरवस्तथा ॥ वंवक्रतुंडभैरवोवंवामदेवभैरवः ॥ १४ ॥ वंदुर्गभैरव-
श्चैववंमेघनादभैरवः ॥ वंसेनाभैरवश्चैववंभक्तप्रियभैरवः ॥ १५ ॥ वंअरुणभैरवोथवंश्वेतभैरवस्तथा ॥ वंपांडुभैरवश्चैववंनीतिभैरव-
स्तथा ॥ १६ ॥ वंशामभैरवश्चैववंहरिद्राख्यभैरवः ॥ वंउच्छिष्टभैरवोथवंकृष्णभैरवस्तथा ॥ १७ ॥ वैकल्पकलितश्चैववैकल्पविधिदर्शिनः
॥ वैकुंठलोकमंगलोवैकुंठधामनायकः ॥ १८ ॥ वैकुंठधामसन्मन्वोवैकुंठधामपरायणः ॥ वैणमानससंचारोवैणमानसमोहनः ॥ १९ ॥
वैणसंभोगगमनोवैणकुंडनिमज्जनः ॥ वैणचक्रसमाकीर्णोवैणविभवनःपरः ॥ २० ॥ वैणचक्रोवैणवोथवैणचक्रनिवारणः ॥ वैह्णवणो-
वैणंधर्मोवैणकर्मपरायणः ॥ २१ ॥ वैणसंतानसंप्रीतोवैणसंतानदायकः ॥ वैणकर्षनदोवैणतांडवानंददायिनः ॥ २२ ॥ वैणगणरतोवैणो
वैणमालाविभूषणः ॥ वैणसंलापसंतुष्टोवैणपश्चान्नभोजनः ॥ २३ ॥ वैष्णवोवैष्णवाचारोवैष्णवाचारतत्परः ॥ वषट्स्वाहास्वरूपोथना-
मसहस्रमुत्तमं ॥ २४ ॥ सारुप्यनामसाहस्रंभैरवस्यप्रकाशितं ॥ देविशत्रुगणाःसर्वेगच्छंतियममंदिरे ॥ २५ ॥ एकरात्रिप्रयोगेणसंसा
हाद्रिपुनाशनं ॥ ग्रहेणाशशिनःस्थित्वायएकांतेमहात्मनः ॥ २६ ॥ बिल्वस्यमूलेप्रजपेद्युतंश्रद्धयायुतः ॥ तस्यशत्रुगणान्योन्यं

जायतेकलहोभृशं ॥ २७ ॥ स्मशानेतुसमागत्यदिक्पालबलिमाहरेत् ॥ तत्कृष्णान्नादिसंमिश्रंनिर्भयःसाधकोत्तमः ॥ २८ ॥ भवेयुस्तत्क्षणा
देवसिद्धाविद्याश्चतुर्दश ॥ २९ ॥ सपश्येद्देवतांतत्रवरदानकृतोद्यमाम् ॥ यद्यदेत्त्रयमंदेवीतत्रभूमौसमाहितः ॥ ३० ॥ द्वितीयवाक्यपितया-
यत्नवान्प्रयतोभवेत् ॥ अथसुलक्षणयावाचाप्रार्थयेन्मनसः फलं ॥ ३१ ॥ ततोन्यंपरमंवक्ष्येविधिंलोकेकहेतवे ॥ साधकोचातिरमणीं
वांछयेदपियांस्त्रियं ॥ ३२ ॥ स्थित्वाकनकमूलेपिव्याघ्रचर्माणिदेशिकः ॥ रक्तांबरपरीधानोरक्तमाल्यानुलेपनः ॥ ३३ ॥ पूजयित्वामहे-
शानंकनकपुष्पेणवार्चितं ॥ यन्नाम्नाप्रयतोमंत्रंप्रजपेच्च विचक्षणः ॥ ३४ ॥ क्षणार्द्धेकर्षयेन्नारीमुर्वशीमपिमानवः ॥ अनेनैवविधाने-
नद्रव्यस्याकृष्टिरुत्तमा ॥ ३५ ॥ कुंजेष्टम्यांवटस्येहमूलेस्थित्वाविचक्षणः ॥ रात्रौनिर्भयचित्तस्तुप्रजपेदयुतंतथा ॥ ३६ ॥ ध्यात्वादेवं
वातरूपंवाचाबंधनमुत्तमं ॥ संजप्यष्टोत्तरशतंयस्मैदद्याज्जपेच्छत ॥ ३७ ॥ सप्राप्नोतिपुत्रफलंचिरायुःसहितंमुदा ॥ वाचास्तंभनका
मस्तुहरिद्राफलमिश्रितः ॥ ३८ ॥ एकरात्रौजपंद्यस्यनाम्नाप्रयतमानसः ॥ तस्यजिव्हाक्षणात्स्तंभंमान्योचापिबृहस्पतिः ॥ ३९ ॥ क्षणा-
त्स्तंभनकामस्तुसर्वत्रलवणान्वितं ॥ कृत्वातुजुहुयाच्छ्रीनान्सर्वालापांस्तुसाधकः ॥ ४० ॥ रोगाणांशमनेप्रीतिहोमैक्षुराजीसंयुतं ॥ जुहुया-
द्यस्यनाम्नातुतस्यनश्यंत्युपद्रवाः ॥ ४१ ॥ एवं विधानेनसुधीः साधयित्वाविचक्षणः ॥ स्तोत्रेदंनिर्भयंकुर्यात्साधयेत्साधकोत्तमः ॥ ४२ ॥
आदौसुविद्याध्यानंचविनियोगंततःस्मरेत् ॥ पश्चात्पाठंप्रकुर्वाणोभुक्तिंमुक्तिंचविंदति ॥ ४३ ॥ संस्थापयेदिष्टमूर्त्तिंपठेन्नामसहस्त्रकं ॥
पूजांकर्तुंमहेशानीकलशस्यजलेनच ॥ ४४ ॥ नाम्नामेतज्जपेद्देवंसर्वाज्ञानविनाशकृत् ॥ अर्कपुष्पसहस्त्राणिकर्णिकाकुसुमानिवा ॥
॥ ४५ ॥ प्रतिनामसमर्पयेत्कलशस्यजलेनच ॥ सर्वसिद्धिमवाप्नोतिनात्रकार्याविचारणा ॥ ४६ ॥ एकवारंपठेद्रात्रौसर्वपापविनाशनं ॥
द्विवारंपठनादेवसान्निध्यकरणंतथा ॥ ४७ ॥ त्रिवारंचपठेन्नित्यंसर्वग्रहनिवारणं ॥ वर्षैकेनमहादेवीशिवरूपोहिनिश्चितं ॥ ४८ ॥ देयंशा-
क्तायशैवायस्वभक्तायविशेषतः ॥ आत्मतत्वंतुविज्ञायकालीभक्तिपरायच ॥ ४९ ॥ अभक्तेभ्यः कुशिष्येभ्यः कृपणायशठायच ॥ नेदं-
दद्यान्महेशानिब्रह्महत्यापरोभवेत् ॥ ५० ॥ भैरवानंदहृदयंभैरवानंदभैरवं ॥ हरिः साक्षाद्भवेद्भक्तः भैरवोनात्रसंशयः ॥ ५१ ॥

स्तवनंबटुकस्येदंयः पठेत्प्रयतोनरः ॥ सर्वसिद्धिमवाप्नोतिसत्यमेवनसंशयः ॥ ५२ ॥ गानेनतत्परंसाक्षात्ध्यानेनचशिवेनच ॥ दत्तात्रेय
समोज्ञाने गंगेवमलनाशने ॥ ५३ ॥ कामदेवइवस्त्रीणांगंधर्वइवरूपवान् ॥ शत्रुनाशेयमः साक्षात्धनेधनपतिर्यथा ॥ ५४ ॥ सभवेत्सा-
धकः श्रेष्ठः सत्यंपरवचोदितं ॥ यइदंपठतेस्तोत्रंशिवेनसहमोदते ॥ ५५ ॥ ज्ञानधर्मार्थभोगीस्यान्मृतेमोक्षपतिर्भवेत् ॥ सत्यंसत्यंमहादे-
वीसत्यंसत्यंमहेश्वरी ॥ ५६ ॥ स्तवस्यास्यप्रभावेनशिवेनसहमोदते ॥ शिवरूपंगुरुंध्यात्वागुरुरूपंशिवंस्मरेत् ॥ ५७ ॥ एवंभूत्वापठेद्दे-
वीसर्वसिद्धिमवाप्स्यति ॥ २५८ ॥ ॥ इति श्रीह॰ बृ॰ ध॰ उपा॰ स्तबके श्रीबटुकभैरवोपा॰ ध्याये भैरवयामलतंत्रे श्रीबकारादि
**बटुकभैरवसहस्त्रनामस्तोत्रनिरूपणंनाम प्रकरणं ॥ ६ ॥** ॥ श्लो॰ ॥ ॥ **अथश्रीबटुकभैरवसहस्त्रनामस्तोत्रं ॥**
॥ **उक्तंचभैरवतंत्रे** ॥ **ईश्वरउवाच** ॥ देवेशिभक्तसुलभेदेवनायकवंदिते ॥ भक्तानांकार्यसिध्यर्थंनिदानंब्रूहितत्वतः ॥ १ ॥ विनैव
न्यासजालेनपूजनेनविनाभवेत् ॥ विनाकायादिक्लेशेनवित्तव्ययंविनेश्वरी ॥ २ ॥ ॥ **देव्युवाच** ॥ ॥ ॐ अस्यश्रीबटुकभैरवसहस्त्रनाम
स्तोत्रमंत्रस्यब्रह्मानंदभैरवऋषिः ॥ त्रिष्टुपृछंदः ॥ बटुकभैरवोदेवता । बंबीजं । ह्रींशक्तिः । सर्वाभिष्टसिद्धयेजपेविनियोगः ॥ ॥
**अथन्यासः** ॥ ॐ ह्रांबांअंगुष्ठाभ्यांनमः ॥ ॐ ह्रींबींतर्जनीभ्यांनमः ॥ ॐ ह्रूंब्रुंमध्यमा॰ ॥ ॐ ह्रैंबैंअनामिका॰ ॥ ॐ ह्रौंबौंकनि-
ष्टिका॰ ॥ ॐ ह्रः वः करतलकरपृष्टाभ्यांनमः ॥ ॥ **एवंहृदयादि** ॥ **अथध्यानं** ॥ उद्यन्दास्करसन्निभंत्रिनयनंरक्तांगरागस्त्रजंस्मेरा
स्यंवरदंकपालमभयंशूलंदधानंकरैः ॥ नीलग्रीवमुदारकौस्तुभधरंशीतांशुचूडोज्वलंबंधूकारणवाससंभयहरंदेवंसदाभावयेत् ॥ ३ ॥
ध्यायेन्नीलाद्रिकांतमित्येवंध्यात्वा ॥ **अथनामानि** ॥ ॐ ह्रींबटुकः कामदोनाथोऽनाथप्रियप्रभाकरः ॥ भैरवोभीतिहादर्पः कंदर्पोमीन-
केतनः ॥ ४ ॥ रुद्रोबटुकभूतीशोभूतनाथः प्रजापतिः ॥ दयालुः क्रूरईशानोजनीशीलोकवल्लभः ॥ ५ ॥ देवोदैत्येश्वरोवीरोवीरवंद्योदिवा-
करः ॥ बलिप्रियः सुरश्रेष्टः कनिष्ठोनैष्ठिकः शिशुः ॥ ६ ॥ महाबलोमहातेजोवित्तजोद्धतिवर्धनः ॥ तेजस्वीवीर्यवान्वृन्द्धोविवृन्द्धोभूत
नायकः ॥ ७ ॥ बालकः पालकः कामोदिकामः काममर्द्दनः ॥ कालिकारमणः कालीनायकः कालिकाप्रियः ॥ ८ ॥ कालीशः कालिकाकांतः का-

लिकानंदवर्धनः ॥ कालिकाहृदयज्ञानीकालिकातनयोनयः ॥ ९ ॥ खगेशःखेचरःखेटोविशिष्टोखेटकप्रियः ॥ कुमारः क्रोधनः कालीप्रियः
पर्वतरक्षकः ॥१०॥ गणेज्योगणयोगूढोगूढप्रायोगणेश्वरः ॥ गणनाथोगणश्रेष्ठो गणमुख्योगणप्रियः ॥११॥ घोरनादोघनेश्यामोघन
स्वामीधनांतकः ॥१२॥ चंपकाभश्चिरंजीवीचारुवेषश्चराचरः ॥ चिंत्योऽचिंत्यगुणोधीमान्सुचिन्तस्छाश्चितीश्वरः ॥१३॥ छत्रीछत्रपति
श्छेत्ताछिन्ननासामनप्रियः ॥ छिन्नाभछिन्नसंतापश्छर्द्दीराछर्दिनांतकः ॥१४॥ जेताजिष्णुर्जह्नीशानोजनानंदोजनेश्वरः ॥ जनकोजनसं-
तोषोजनजायविनाशनः ॥१५॥ जालंधरोजनाराध्योजनाध्यक्षोजनप्रियः ॥ जीवहाजीवदोजंतुर्जीवनाथोजलेश्वरः ॥१६॥ जयदोजित-
रोजिष्णोजयश्रीर्जयवर्धनः ॥ जयभूमिर्जयाकारोजयहेतुर्जयेश्वरः ॥१७॥ झंकारकृदनंतात्माझंकारहेतुरात्मभूः ॥ झञ्योश्चरिहरीभ
र्त्ताविभर्ताभृत्यकेश्वरः ॥१८॥ टीत्कारहृदयेयात्माटंकेशोठंकनायकः ॥ ठकारभूठरंध्रीशोगिरिष्टठकुरःपतिः ॥१९॥ ढुंढिर्ढक्काप्रियः
पांथोढुंढिराजोनिरंतकः ॥ ताम्रास्तमीश्वरस्नोतातीर्थराजस्तडित्प्रभः ॥२०॥ त्रिअक्षस्त्र्यक्षकस्तंभस्तार्क्षकस्तंभटेश्वरः ॥स्छलस्थःस्छा
वरःस्छातास्छिरबुद्धिःस्छिरेंद्रियः ॥२१॥ स्छिरज्ञानीस्छिरप्रीतिःस्छिरस्छीतिस्छिराशयः ॥ दामोदामोदरोदंभोदाडिमीकुसुमःप्रियः
॥२२॥ दारिद्र्यहादमीदिव्योदिव्यदेहोदिनप्रभुः ॥ दिनकरोदिवानाथोदिवसेशोदिवाकरः ॥२३॥ दीर्घाश्चरोदलज्योतिर्दलेशोदलसुं-
दरः ॥ दलप्रियोदलाभासोदलपूज्योदलप्रभुः ॥२४॥ दलकांतिर्दलाकारोदलसेव्योदलार्चितः ॥ दीर्घबाहुर्दलश्रेष्ठोदललुब्धोदलाकृतिः॥
२५॥ दानवश्योदयासिंधुर्दयालुर्दीपवल्लभः ॥ धनेशोधनदोघर्मोधनराजोधनप्रभुः ॥२६॥ धनप्रदोधनाध्यक्षोधनमान्योधनंजयः ॥ धी-
वरोधातुकोधाताध्रुवोधूमलवर्धवः ॥२७॥ धनिष्ठोधवलछत्रीधनकाम्योधनेश्वरः ॥ धीरोधीरतरोधेनुर्धीरेशोधरणीप्रभुः ॥ २८ ॥ धराधी-
शोधरानाथोधरणीनायकोधरः ॥ धराकांतोधरापालोधरणीजनवल्लभ ॥२९॥ धराधरोधरोधृष्टोधृतराष्ट्रोधनीश्वरः ॥ नारदोनीरदोने-
तानीतिपूज्योनतिप्रियः ॥३०॥ नीतिलभ्योऽन्नतीशानोनीतिलब्धोव्रतीश्वरः ॥ पार्थवःपार्थसंपूज्यःपार्थदःप्रणतःपृथुः ॥३१॥ पृथिवीशः
पृथासूनुःपृथिवीभृत्यरीश्वरः ॥ पुराणःपारदःपांथःपांचालीपावकःप्रभुः ॥३२॥ पूर्वःसुरपतिःश्रेयान्प्रीतिदःप्रीतिवर्द्धनः ॥ पार्वतीशः

परेशानः पार्वती हृदयप्रियः ॥ ३३ ॥ पार्वतीरमणः पूतः पवित्रः पापनाशनः ॥ पात्रीपत्रालिसंतुष्टः परितुष्टः पुमान्प्रियः ॥ ३४ ॥ पर्वेशः पर्वताधीशः पर्वतोनायकात्मजः ॥ फाल्गुनस्तु फणानाथ फणीशफणरक्षकः ॥ ३५ ॥ फणीपतिः फणीशानः फणराजः फणाकृतिः ॥ बलभद्रोबलीबालोबलधीर्बलवर्द्धनः ॥ ३६ ॥ बलप्राणोबलाधीशोबलिदानप्रियंकरः ॥ बलिराजोबलिप्राणोबलिनाथोबलप्रियः ॥ ३७ ॥ बलीवरश्चबालेशोबालकप्रियदर्शनः ॥ भद्राभद्रप्रभोभीमोभीमसेनोभयंकरः ॥ ३८ ॥ भव्योभव्याप्रियोभूतपति र्भूतविनायकः ॥ भूतेशोभूतिदोभर्गोभूत भव्योभवेश्वरः ॥ ३९ ॥ भवानीशोभवेशानोभवानी नायकोर्भकः ॥ मकारोमाधवोमीनोमीनकेतुर्महेश्वरः ॥ ४० ॥ महेषुर्मदनोमंथोमिथुनेसोमराधिपः ॥ मरीचिर्मंजुलोमोहोमोहहा मोह मर्दनः ॥ ४१ ॥ मोहकोमोहनोमेधाप्रियोमोहविनायकः ॥ महिपतिर्महीशानोमहीराजोमनोहरः ॥ ४२ ॥ महीश्वरोमहीपालोमहीनाथोमहीप्रियः ॥ महीधरोमहादेवोमनुराजोमनुप्रियः ॥ ४३ ॥ मौनीमौनधरोमेघोमंदारोमतिवर्द्धनः ॥ मतिदोमंथरोमंत्रोमंत्रीशोमंत्रनायकः ॥ ४४ ॥ मेधावीमानदोमानीमानहामानमर्दनः ॥ मीनगोमकराधीशोमधुरोमणिरंजितः ॥ ४५ ॥ मणिरम्योमणिध्यातामणिमंडनमंडितः ॥ मंत्रपोमंत्रदोमुग्धोमोक्षदोमोक्षवल्लभः ॥ ४६ ॥ मल्लोमल्लप्रियोमंचोमल्लकोमेलनप्रभुः ॥ मल्लीकोमल्लिकागंधीमल्लिकाकुसुमप्रियः ॥ ४७ ॥ मालतीशोमधानाथोऽमोघमूर्तिर्मघेश्वरः ॥ मूलाभोमूलहामूलोमूलदोमूलमत्सरः ॥ ४८ ॥ माणिक्यरोचिसंमुग्धोमणिकूटोमणिप्रियः ॥ मुकुंदोमदनोमंदोमंदवंद्योमनुप्रभुः ॥ ४९ ॥ मनस्योमेनकाधीशोमेनकाप्रियदर्शनः ॥ यमोयामोयमीदेवोयादवोयदुनायकः ॥ ५० ॥ याचकोयाज्ञिकोयज्ञोयज्ञेशोयज्ञवर्धनः ॥ रमापतीरमाधीशोरमेशोरामवल्लभः ॥ ५१ ॥ रमापतिरमानाथोरमाकांतोरमेश्वरः ॥ रेवतीरमणोरामोरमेशोरामनंदनः ॥ ५२ ॥ रम्यमूर्तिरतीशानोराकायानायकोरविः ॥ लक्ष्मीधरोललजिह्वोलक्ष्मीबीजजपेरतः ॥ ५३ ॥ लंपटोलंबराजेशोलंबोदरोलकारभूः ॥ वामनोवल्लभोवंद्योवनमालीवनेश्वरः ॥ ५४ ॥ वनस्थोवनगोविंध्योविंध्यराजोवनाह्वयः ॥ वनचरोवनाधीशोवनमालाविभूषणः ॥ ५५ ॥ वेणुप्रियोवनाकारोवनाराध्योवनप्रभुः ॥ शंभुः शंकरसंतुष्टः शंबरारिःशरासनः ॥ ५६ ॥ शबरीप्रणतः

शालः शिलीमुखध्वनिप्रियः ॥ शकुलः शल्लकः शीतः शीलरश्मीसितांशुकः ॥५७॥ शीलदः शीकरः शीलशीलशीलीशनैश्वरः ॥ सिद्ध
सिद्धिकरः साध्यः सिद्धिभूः सिद्धिभावनः ॥५८॥ सिद्धांनवल्लभः सिंधुसिंधुतीरनिसेवितः ॥ सिंधुपतिः सरोधीराः सरसीरुहलोचनः ॥५९
॥ सरित्पतिः सरित्संस्थः सरः सिंधुः सरोवरः ॥ सरवावीरपतिः सूतः सचेत्तासत्पतिः सितः ॥६०॥ सिंधुराजः सदाभूतः सदाशिवः सतांपतिः ॥ स-
दीशः सदनः सूरिः सेव्यमानसतीपतिः ॥६१॥ सूर्यः सूर्यपतिः सेव्यः सेवाप्रियसनातनः ॥ सतीशः सरशीनाथः सतीराजः सतीश्वरः ॥६२॥
सतीप्राणसतीनाथः सतीसेव्यः सतीश्वरः ॥ सिद्धराजः सतीतुष्टः स वः सव्यवाहनः ॥६३॥ सतीनायकसंतुष्टः सव्यसाची सुमंतकः ॥ स-
च्चित्तः सर्वसंतोषीसर्वारामः सुसिद्धिदः ॥६४॥ सर्वाराध्यः सचीवाख्यः सतीपतिसुसेवितः ॥ सागरः सगरः सार्थः समुद्रः समुद्रप्रियः ॥ ६५॥
समुद्रतीरसंतुष्टः समुद्रप्रियदर्शनः ॥ समुद्रीशः सरोनाथः सरसीजविलोचनः ॥ ६६॥ सरसीजलदाकारः सरसीजलदार्चितः ॥ सामुद्रिकः
समुद्रात्मासाध्यमानः सुरेश्वरः ॥६७ ॥ सुरसेव्यः सुरेशानः सुरनाथः सुरार्चितः ॥ सुराध्यक्षः सुराराध्यः सुरवंद्यविशारदः ॥६८॥ सुरमुख्यः
सुरप्रायः सुरसिंधुनिवासवान् ॥ सुधाप्रियः सुधाधीशः सुधाराध्यः सुधापतिः ॥६९॥ सुधानाथः सुधाभूतः सुधासागरसेवितः ॥ हाटकोहीरको
हताहीरकस्यरुचिः प्रभुः ॥७०॥ हव्यवाहोहरिद्राभोहरिद्रारसमर्दनः ॥ हेतिर्हेतुर्हरित्राताहरिनाथोहरिप्रियः ॥ ७१॥ हरिपूज्योहरिप्राणोहरन्ह-
ष्टोहरींद्रकः ॥ हरीशोहंतृकोहीरोहरिनामपरायणः ॥७२॥ हरिमुग्धोहरिरम्योहरदासोहरीश्वरः ॥ हरोहरिपतिर्हारोरोहिणीचित्तहारकः ॥७३॥
हरहितोहरप्राणोहरिवाहनशोभनः ॥ हासोहासप्रियोहूहूर्हुतभुक्हुतवाहनः ॥ ७४॥ हुताशनोहलीहकोहालाहलहलायुधः ॥ हलाका-
रोहलीशानोहलिपूज्योहलिप्रियः ॥७५॥ हरपुत्रोहरोत्साहोहरसूनुर्हरात्मजः ॥ हरवंद्योहराधीशोहरांतकोहराकृतिः ॥७६॥ हरमान्योह-
रांकस्थोहरवैरिविनाशनः ॥ हरशत्रुर्हरामर्षोहंकारोहरिणीप्रियः ॥७७॥ हाटकेशोहटेशानोहाटकप्रियदर्शनः ॥ हाटकोहाटकप्राणोहाटभूष-
णभूषितः ॥७८॥ हेतिदोहंतकोहंसोहंसगतिर्हराह्वयः ॥ हंसीपतिर्हरोन्मत्तोहंशीशोहरवल्लभः ॥७९॥ हरपुष्पप्रभोहंसीप्रियोहंसविला-
सकः ॥ हरबीजरतोहारीहरितोहरितांपतिः ॥८०॥ हरित्प्रभुहरित्पालोहरिनंतरनायकः ॥ हरिदिशोहरित्प्राणोहरप्रियोप्रियोहितः ॥८१॥

हेरंबो हुंकृतिक्रुद्धो हेरंबानंदनोहटी ॥ हेरंबप्राणसंहर्ता हेरंबाहृदयप्रियः ॥८२॥ क्षमापतिः क्षणः क्षांतः क्षुरधारः क्षितीश्वरः ॥ क्षितीशः क्षितितः क्षीणः क्षितिपालः क्षितिप्रभुः ॥ ८३ ॥ क्षितीशानः क्षितिप्राणाक्षितिनायकसत्प्रियः ॥ क्षितिराजः क्षणाधीशः क्षणापतिः क्षणेश्वरः ॥८४॥ क्षणप्रियः क्षमानाथः क्षणदानायकः प्रियः ॥ क्षणिकः क्षणदाधीशः क्षणदाप्राणदः क्षमी ॥ ८५॥ क्षमः क्षोणिपतिः क्षोभः क्षोभकारिक्षमाप्रियः ॥ क्षमाशीलः क्षमारूपः क्षमामंडनमंडितः ॥ ८६॥ क्षमानाथः क्षमाधारक्षकामारिक्षमाकरः ॥ क्षेमक्षीणरजाः क्षुद्रः क्षुद्रपानविशारदः ॥८७॥ क्षुद्रेशानः क्षणाकारः क्षीरपानकतत्परः ॥ क्षीरशायीक्षणेशानः क्षोणिभृत्क्षणदोत्सवः ॥८८॥ क्षेमंकरः क्षमालुब्धक्षमाशास्त्रविशारदः ॥ क्षमीश्वरः क्षमाकामः क्षमाहृदयमंडनः ॥८९॥ नीलाद्रिरुचिराशीशोनीलपर्वतसन्निभः ॥ नीलमणिः प्रभारम्यः शशिभूषणभूषितः ॥ ९०॥ शशाधरः शरीभूतो मुंडमालाविभूषितः ॥ मुंडस्थोमुंडसंतुष्टो मुंड मालाधरोनघः ॥ ९१॥ दिग्वासा विदिगाकारो दिगंबरवरप्रदः ॥ दिगंबरीश आनंदो दिगंबरतनूद्भवः ॥ ९२॥ पिंगलैकजटाधृष्टोडमरुवादनप्रियः ॥ सृणीकरः सृणीशानः खड्गधृक्खड्गपालकः ॥ ९३॥ शूलहस्तोमतंगाभोमातंगोत्सवः सुंदरः ॥ अभयंकर उर्वगोलंकापतिविनाशनः ॥ ९४॥ नगाशयोनगेशानोनागमंडनमंडितः ॥ नगाकारोनगाधीशोनागशायीनगप्रियः ॥ ९५॥ घटोत्सवो घटाकारो घंटावाद्यविशारदः ॥ कपालपाणिरंबेशः कपालासनसादनः ॥ ९६॥ पद्मपाणिकपालश्चत्रिनेत्रोनागवल्लभः ॥ किंकिणीजालसंतुष्टोजलप्रायोजलाकरः ॥९७॥ अपमृत्युहरोमायामोहमूलविनाशनः ॥ आयुधः कमलानाथः कमलाकांतवल्लभः ॥९८॥ राज्यदोराजराजेशोराजीवपट्टशोभनः ॥ डाकिनीनायकोनित्योनित्यधर्मपरायणः ॥ ९९ ॥ डाकिनीहृदयज्ञानीडाकिनीदेहनाशकः ॥ डाकिनीप्राणदः शुद्धः अद्वैयचरितोविभुः ॥१००॥ हेमप्रभोहिमेशानोहिमानीप्रियदर्शनः ॥ हेमदोमर्मदोनामिनामधेयोनगात्मजः ॥ १०१॥ वैकुंठोवासुकीप्राणोवासुकीकंठभूषणः ॥ कुंडलीशोमखध्वंसीमखराजोमखेश्वरः ॥१०२॥ मखाकारोमखाधीशोमखमालाविभूषणः ॥ अंबीकावल्लभोवाणीपतिर्वाणीविशारदः ॥१०३॥ वाणीशोवाचप्राणश्च वचस्थोवचनप्रियः ॥ वेलाधरोदिशामीशोदिग्नागोहिदिगीश्वरः ॥१०४॥ दुर्वाप्रियोदुराराध्यो-

ललाटे। ॐ ह्रींभूतहननाय॰ नेत्रयोः । ॐ ह्रींसारमेयानुगाय॰ भ्रुवोः । ॐ ह्रींभूतनाथाय॰ कर्णयोः। ॐ ह्रींप्रेतवाहकाय॰ कपोलयोः । ॐ
ह्रींभस्मांगाय॰ नासापुटे। ॐ ह्रींसर्पभूषणाय॰ ओष्ठयोः । ॐ ह्रीं आदिनाथाय॰ मुखे । ॐ ह्रींशक्तिहस्ताय॰ गले। ॐ ह्रींदैत्यशम-
नाय॰ स्कंधयोः । ॐ ह्रींअतुलतेजसे॰ बाह्वोः ॥ ॐ ह्रींकपालिने॰ करयोः ॥ ॐ ह्रींमुंडमालिनेन॰ हृदये ॥ ॐ ह्रींशांताय॰ वक्षस्थ-
ले । ॐ ह्रींकामचारिणेस्तनयोः । ॐ ह्रींसदातुष्टायउदरे । ॐ ह्रीं क्षेत्रेशाय॰ पार्श्वयोः । ॐ ह्रींक्षेत्रपालाय पृष्ठे। ॐ ह्रींक्षेत्रज्ञाय॰
नाभौ। ॐ ह्रींपापौघनाशनाय॰ कट्यां । ॐ ह्रींबटुकाय॰ लिंगे । ॐ ह्रींरक्षाकराय॰ गुदे । ॐ ह्रींरक्तलोचनाय॰ ऊर्वोः । ॐ ह्रींघुर्घु-
राय॰ जानुनि। ॐ ह्रींरक्तपायिने॰ जंघयोः। ॐ ह्रींसिद्धपादुकाय॰ गुल्फयोः । ॐ ह्रींसुरेश्वरायपादपृष्ठे । ॐ ह्रीं आपदुद्धारकाय॰ आ-
पादतलमस्तकपर्यंतंन्यसेत् ॥ ॐ ह्रींक्ष्म्रौंब्लौंह्रीं ॐ स्वाहा आपदुद्धारणभैरवायनमः ॥ अनेनसर्वांगेव्यापकंकुर्यात् ॥ **अथदिग्न्यासः** ॥
ॐ ह्रींडमरुहस्तायनमः पूर्वे ॥ ॐ ह्रींदंडधारिणेनमः द॰ ॥ ॐ ह्रींखड्गहस्ताय॰ प॰ ॥ ॐ ह्रींघंटावादिने॰ उ॰ ॥ ॐ ह्रीं अग्निवर्णाय॰ आ॰
। ॐ ह्रींदिगंबराय॰ नै॰ ॥ ॐ ह्रींसर्वभूतस्थाय॰ वा॰ । ॐ ह्रीं अष्टसिद्धिदाय॰ ई॰ ॥ ॐ ह्रींखेचारिणे॰ ऊर्ध्वे॰ ॥ ॐ ह्रींरौद्ररूपिणे॰ पाताले॰
॥ **अथकर॰** ॥ ॐ ह्रींरुद्रायनमः अंगु॰ । ॐ ह्रींशिखीसखायनमः तर्ज॰ । ॐ ह्रींशिवायनमः मध्य॰ । ॐ ह्रींत्रिशूलिने॰ अना॰। ॐ
ह्रींब्रह्मणेनमः कनि॰ । ॐ ह्रींत्रिपुरांतकायनमः करतलयोः । ॐ ह्रींमांसाशिनेनमः कराग्रेषु । ॐ ह्रींदिगंबरायनमः करपृष्ठयोः ॥ **अथषडं-
गन्यासः** ॥ ॐ ह्रींभूतनाथायन॰ हृदये। ॐ ह्रीं आदिनाथाय॰ मूर्धनि। ॐ ह्रीं आनंदनाथाय॰ शि॰ । ॐ ह्रींसिद्धशाबरनाथाय॰ क॰। ॐ
ह्रींसहजानंदनाथाय॰ नेत्र॰ ॐ ह्रींश्री आनंदनाथाय॰ अस्त्रा॰ । ॐ अस्यश्रीबटुकभैरवमंत्रस्य । बृहदारण्यकऋषिः । अनुष्टुप्छं-
दः श्रीबटुकभैरवोदेवता । बंबीजं । ह्रींशक्तिः । ॐ कीलकं । श्रीबटुकभैरवप्रसादसिध्यर्थ्येस्तोत्रादौ अष्टोत्तरशतमूलमंत्रजपेविनियोगः
॥ **अथमंत्रन्यासः** ॥ ॐ ह्रीं अंगु॰ । ॐ बटुकायत॰ । ॐ आपदुद्धारणाय॰ म॰ । ॐ कुरुकुरु अ॰ ॥ **अथसकलमनोरथप्राप्त्यर्थमि-
दंध्यानं** ॥ शुद्धस्फटिकसंकाशंसहस्रादित्यवर्चसं ॥ नीलजीमूतसंकाशंनीलांजनसमप्रभं ॥ ७५ ॥ अष्टबाहुंत्रिनयनंचतुर्बाहुंद्विबाहु-

कं ॥ दंष्ट्राकरालवदनंनूपुरारावसंकुलं ॥ ७६ ॥ भुजंगमखिलंदेवमग्निवर्णशिरोरुहं ॥ दिगंबरं कुमारेशंबटुकाख्यंमहाबलं ॥ ७७ ॥ खट्वांग
मसिपाशंचशूलंदक्षिणभागतः ॥ डमरुंचकपालंचवरदं भुजगंतथा ॥ आत्मवर्णसमोपेतंसारमेयसमन्वितं ॥ ७८ ॥ **एवंध्यात्वा** ॥ ॐ ह्रीं
भैरवभैरवभयकरहरमांरक्षरक्षहुंफट्स्वाहा ॥ **इतिमंत्रेणप्रार्थयित्वा** ॥ पूर्वोक्तयंत्रपीठेआवाहनादिमुद्राप्रदर्शयेत् ॥ षोडशोपचारैरभ्य
र्च ॥ **अथबलिदानम्** ॥ शुद्धासनोपविश्य ॥ ह्रांह्रींकुंएभिर्बीजैः त्रिभिराचम्य ॥ मूलेनप्राणायामंकृत्वा । देशकालौसंकीर्त्य । ममामुकफलावा-
प्तये । श्रीबटुकप्रीतयेबलिदानमहंकरिष्ये ॥ **इतिसंकल्प्य** ॥ गणपतिंदुर्गांरक्तैश्चंदनाक्षतपुष्पैरभ्यर्च्यदेवस्याग्रेत्रिकोणंचतुरस्रंमंडलंकृ-
त्वातत्रगंधाद्यैरभ्यर्च्य । पात्रस्थंकवलाकारंसंपादितंबलिंनिधायगंधपुष्पाभ्यांमूलांतेबलिरूपायनमः ॥ इतिबलिंसंपूज्यदेवंतत्रसंचिंत्यसंपूज्य
हस्तेजलमादायमूलमंत्रमुच्चार्यजलंभूमौनिक्षिप्यस्वहस्तेबलिमादायदेवायसमर्पयेत् ॥ ततःसंकल्पंकुर्यात् ममसकलकामनासिध्यर्थंश्रीबटु-
कभैरवस्तोत्रस्यैकादशसहस्रपुरश्चरणांगत्वेनप्रतिस्तोत्रंमूलमंत्रस्योत्तरशतसंख्याजपसंपुटितपंचाशत्संख्यापाठमहंकरिष्येवायथाशक्त्यैक
प्रभृतिपाठमहंकरिष्ये ॥ मूलमंत्रं अष्टोत्तरशतवारंजपेत् ॥ **मूलमंत्रः** ॥ ॐ ह्रींबटुकाय आपदुद्धारणायकुरुकुरु बटुकायह्रीं ॐ ॥
एवंअष्टोत्तरशतमूलमंत्रजपकृतेनश्रीबटुकभैरवः प्रीयतां ॥ बटुकायनमस्कृत्यपंचोपचारैः संपूज्य ॥ **स्तोत्रंपठेत्** ॥ ॐ ह्रींभैरवोभूतना-
थश्चभूतात्माभूतभावनः ॥ क्षेत्रदः क्षेत्रपालश्चक्षेत्रज्ञः क्षत्रियोविराट् ॥ ७९ ॥ स्मशानवासिमांसाशिखर्पराशिस्मरांतकृत् ॥ रक्तपःपा-
नपः सिद्धः सिद्धिदः सिद्धसेवितः ॥ ८० ॥ कंकालः कालशमनः कलाकाष्टातनुः कविः ॥ त्रिनेत्रोबहुनेत्रश्चतथापिंगललोचनः ॥ ८१ ॥ शूलपा-
णिःखड्गपाणिः कंकालीधूम्रलोचनः ॥ अभीरुर्भैरवीनाथोभूतपोयोगिनीपतिः ॥ ८२ ॥ धनदोधनहारीचधनवान्प्रीतिभाविनः ॥ नागहारो
नागपाशोव्योमकेशः कपालभृत् ॥ ८३ ॥ कालः कपालमालीचकमनीयः कलानिधिः ॥ त्रिलोचनोज्वलन्नेत्रस्त्रिशिखीचत्रिलोकपः ॥ ८४ ॥
त्रिनेत्रतनयोडिंभः शांतः शांतजनप्रियः ॥ बटुकोबटुवेशश्चखट्वांगवरधारकः ॥ ८५ ॥ भूताध्यक्षः पशुपतिःभिक्षुकः परिचारिकः ॥ धूर्तोदिगं-
बरः शूरोहरिणः पांडुलोचनः ॥ ८६ ॥ प्रशांतः शांतिदः सिद्धः शंकरः प्रियबांधवः ॥ अष्टमूर्तिनिधीशश्चज्ञानचक्षुस्तपोमयः ॥ ८७ ॥ अ-

ष्टाधारः षडाधारः सर्पयुक्तः शिखीसखः ॥ भूधरो भूधराधीशो भूपतिर्भूधरात्मजः ॥८८॥ कंकालधारी मुंडी च नागयज्ञोपवीतवान् ॥ जृं-
भणो मोहनस्तंभी मारणः क्षोभणस्तथा ॥८९॥ शुद्धनीलांजनप्रख्यो दैत्यह्ना मुंडभूषितः ॥ बलिभुग्बलिभुङ्नाथो बालोबालपराक्रमः ॥९०॥
सर्वापत्तारणो दुर्गो दुष्टभूतनिषेवितः ॥ कामी कलानिधिः कांतः कामिनीवशकृद्वशी ॥९१॥ सर्वसिद्धिप्रदो वैद्यो प्रभुर्विष्णुरितिर्वहिः ॥ अष्टो-
त्तरशतं नाम्नां भैरवस्य महात्मनः ॥९२॥ मया ते कथितं देवी रहस्यं सर्वकामदं ॥ य इदं पठति स्तोत्रं नामाष्टशतमुत्तमं ॥९३॥ न तस्य दुरितं
किंचिन्न च भूतभयं तथा ॥ न च मारिभयं तस्य गृहराजभयं तथा ॥९४॥ न शत्रुभ्यो भयं कापि प्राप्नुयान्मानवः क्वचित् ॥ पातकानां भयं चैव
पठेत्स्तोत्रमनुत्तम ॥९५॥ मारिभये राजभये तथा चोराग्निजे भये ॥ उत्पत्तिके महाघोरे तथा दुःस्वप्नदर्शने ॥९६॥ बंधने च तथा घोरे पठेत्स्तो-
त्रमनन्यधीः ॥ सर्वं प्रशमनं याति भयं भैरवकीर्तनात् ॥९७॥ एकादशसहस्त्रं तु पुरश्चरणमुच्यते ॥ यस्त्रिसंध्यं पठेद्देवी संवत्सरमतंद्रितः ॥
९८॥ स सिद्धिं प्राप्नुयादिष्टां दुर्लभामपि मानवः ॥ षण्मासं भूमिकामस्तु जपित्वा प्राप्नुयान्महिं ॥९९॥ राजशत्रुविनाशार्थं जपेन्मासाष्टकं पुनः ॥
रात्रौ वारत्रयं चैव नाशयत्येव शात्रवान् ॥१००॥ जपेन्मासत्रयं मर्त्यो राजानं वशमानयेत् ॥ धनार्थी च सुतार्थी च दारार्थी यस्तु मानवः ॥१०१॥
जपेन्मासत्रयं देवी वारमेकं तथा निशि ॥ धनं पुत्रं तथा दारान प्राप्नुयान्नात्र संशयः ॥१०२॥ रोगी रोगात्प्रमुच्येत बद्धो मुच्येत बंधनात् ॥ भीतो भ-
यात्प्रमुच्येत देवी सत्यं न संशयः ॥१०३॥ निगडैश्चापि बद्धो यः कारागृहे निपातितः ॥ शृंखलाबंधनं प्राप्तं पठेच्चैव दिवानिशि ॥१०४॥ यंयं चिंतय-
ते कामं तंतं प्राप्नोति निश्चितं ॥ अप्रकाश्यं परं गुह्यं न देयं यस्य कस्यचित् ॥१०५॥ सुकुलीनाय शांताय ऋजवे दंभवर्जिते ॥ दद्यात्स्तोत्रमिमं पुण्यं
सर्वकामफलप्रदं ॥१०६॥ इति श्रुत्वा ततो देवी नामाष्टशतमुत्तमं ॥ जजाप परया भक्त्या सदा सर्वेश्वरेश्वरी ॥१०७॥ भैरवोपी प्रहृष्टो भूत्सर्वलो-
कमहेश्वरः ॥ वरं ददाति भक्तेभ्यो पठेत्स्तोत्रमनन्यधीः ॥१०८॥ संतोषं परमं प्राप्य भैरवस्य महात्मनः ॥१०९॥ वारंवारं भुवनजननी प्रोच्यते-
साधुवादः ॥ सत्यं सत्यं जगति सकले भैरवो देव एकः ॥ यां यां सिद्धिं भुवनजठरे कामयेन्मानवो यस्तांस्तां सिद्धिं वितरति सदा भैरवः सुप्रसन्नः ॥११०
॥ पाणिभ्यां परितः प्रपीड्य सुदृढं निश्चोत्य निश्चोत्य च ब्रह्मांडं सकलं प्रचलितरसालोच्चफलाभं मुहुः ॥ पायंपायमपाययत्त्रिजगति मुन्मुत्तकर्तैर-

सैनृत्यंस्तांडवमंबरेणाशिरसापायान्महाभैरवः ॥ १११ ॥ बिभ्राणः शुभ्रवर्णंद्विगुणनवभुजंपंचवक्त्रंत्रिनेत्रं ज्ञानमूद्रेंद्रशस्त्रंसविशमम्रृ तकंशंखभैषज्यचापं ॥ शूलंखड्गांगबाणान् डमरुमसिगदावन्हिमारोग्यमाला मिष्टाभीतिंचदोर्भिर्जयतिखलुमहाभैरवः सर्वसिध्यै ॥ ११२ ॥ क्वाकाशःक्वसमीरणः क्वदहनः क्वापश्चविश्वंभरः ॥ क्वब्रह्माक्वजनार्दनः क्वतरणिः क्वेंदुश्चदेवासुराः ॥ कल्पांतेभदिगिनदप्र-मुदितः श्रीसिद्धयोगीश्वरोक्रीडानाटकनायकोविजयतेदेवोमहाभैरवः ॥ ११३ ॥ लिखित्वापरयाभक्त्याभैरवस्तोत्रमुत्तमं ॥ अ-ष्टानांब्राह्मणानांच देयंपुस्तकमादरात् ॥ ११४ ॥ यान्यान्समीहतेकामान् तांस्तान्प्राप्नोत्यसंशयं ॥ इहलोकेसुखंप्राप्य पुस्तकस्य प्रसादतः ॥ शिवलोकमनुप्राप्याशिवेनसहमोदते ॥ ११५ ॥ लिखित्वाभूर्जपत्रेतुत्रिलोहपरिवेष्टितं ॥ सौम्येचवस्तुवसनेकर्पटेच सुशो-भने ॥ ११६ ॥ करेबाहौकलेकट्यांमूर्ध्निंत्रिलोहगोपितं । यस्तुधारयतेस्तोत्रंसर्वत्रजयमाप्नुयात् ॥ ११७ ॥ ॥ इतिश्रीहः बृ. ध. उपा. स्त. श्रीबटुकभैरवोपा. ध्याये रुद्रयामलोक्तआपदुद्धारक श्रीबटुकभैरवस्तोत्रनिरूपणं नामप्रकरणं ॥ ११ ॥

श्लो० ॥ ॥ अथश्रीबटुकभैरवाष्टोत्तरशतनामावलिः ॥ ॥ ॐ अस्यश्रीबटुकभैरवाष्टोत्तरशतनाममंत्रस्य । बृहदारण्यकऋषिः । अनुष्टुप्छंदः । श्रीबटुकभैरवोदेवता । बंबीजां ह्रींशक्तिः । प्रणवः कीलकं । श्रीबटुकभैरवप्रीत्यर्थं एभिर्द्-व्यैः पृथक्नाममंत्रेणाहवनेविनियोगः । तत्रादौह्रांबां इतिकरंन्यासंच हृदयादिकृत्वा ध्यात्वागंधाक्षतैः संपूज्य हवनंकुर्यात् ॥ १ ॐ भैरवायनमः २ ॐ भूतनाथायनमः ३ ॐ भूतात्मनेनमः ४ ॐ भूतभावनायनमः ५ ॐ क्षेत्रज्ञायनमः ६ ॐ क्षेत्र-पालायनमः ७ ॐ क्षेत्रदायनमः ८ ॐ क्षात्रियायनमः ९ ॐ विराटायनमः १० ॐ स्मशानवासिनेनमः ११ ॐ मांसाशिनेनमः १२ ॐ खर्पराशिनेनमः १३ ॐ स्मरांतकायनमः १४ ॐ रक्तपायनमः १५ ॐ पानपायनमः १६ ॐ सिद्धायनमः १७ ॐ सिद्धिदायनमः १८ ॐ सिद्धिसेवितायनमः १९ ॐ कंकालायनमः २० ॐ कालशमनायनमः २१ ॐ कलाकाष्टायनमः २२ ॐ तनवेनमः २३ ॐ कवयेनमः २४ ॐ त्रिनेत्रायनमः २५ ॐ बहुनेत्रायनमः २६ ॐ पिंगललोचनायनमः २७ ॐ शूल

पाणयेनमः २८ ॐ खड्गपाणयेनमः २९ ॐ कपालिनेनमः ३० ॐ धूम्रलोचनायनमः ३१ ॐ अभिरवेनमः ३२ ॐ भैरवीनाथाय
नमः ३३ ॐ भूतपायनमः ३४ ॐ योगिनीपतयेनमः ३५ ॐ धनदायनमः ३६ ॐ धनहारिणेनमः ३७ ॐ धनवतेनमः ३८ ॐ
प्रीतिवर्धनायनमः ३९ ॐ नागहारायनमः ४० ॐ नागपाशायनमः ४१ ॐ व्योमकेशायनमः ४२ ॐ कपालभृतेनमः ४३ ॐ
कालायनमः ४४ ॐ कपालमालिनेनमः ४५ ॐ कमनीयायनमः ४६ ॐ कलानिधयेनमः ४७ ॐ त्रिलोचनायनमः ४८ ॐ
ज्वलन्नेत्रायनमः ४९ ॐ त्रिशिखिनेनमः ५० ॐ त्रिलोकपायनमः ५१ ॐ त्रिनेत्रतनयायनमः ५२ ॐ डिंभायनमः ५३ ॐ शांता
यनमः ५४ ॐ शांतजनप्रियायनमः ५५ ॐ बटुकायनमः ५६ ॐ बटुवेशायनमः ५७ ॐ खट्वांगधारकायनमः ५८ ॐ भूताध्य-
क्षायनमः ५९ ॐ पशुपतयेनमः ६० ॐ भिक्षुकायनमः ६१ ॐ परिचारकायनमः ६२ ॐ धूर्तायनमः ६३ ॐ दिगंबरायनमः ६४
ॐ शूरायनमः ६५ ॐ हरिणेनमः ६६ ॐ पांडुलोचनायनमः ६७ ॐ प्रशांतायनमः ६८ ॐ शांतिदायनमः ६९ ॐ सिद्धायनमः
७० ॐ शंकरप्रियबांधवायनमः ७१ ॐ अष्टमूर्तयेनमः ७२ ॐ निधीशायनमः ७३ ॐ ज्ञानचक्षुषेनमः ७४ ॐ तपोमयायनमः ७५
ॐ अष्टाधारायनमः ७६ ॐ षडाधारायनमः ७७ ॐ सर्पयुक्तायनमः ७८ ॐ शिखिसखायनमः ७९ ॐ भूधरायनमः ८० ॐ भू-
धराधीशायनमः ८१ ॐ भूपतयेनमः ८२ ॐ भूधरात्मजायनमः ८३ ॐ कंकालधारिणेनमः ८४ ॐ मुंडिनेनमः ८५ ॐ अत्रयज्ञोप-
वितयेनमः ८६ ॐ जृंभृणायनमः ८७ ॐ मोहनायनमः ८८ ॐ स्तंभिनेनमः ८९ ॐ मारणायनमः ९० ॐ क्षोभणायनमः ९१ ॐ शु-
द्धनीलांजनप्रख्यायनमः ९२ ॐ दैत्यघ्नेनमः ९३ ॐ मुंडभूषितायनमः ९४ ॐ बलिभुजेनमः ९५ ॐ बलिभुग्नाथायनमः ९६ ॐ बालाय-
नमः ९७ ॐ बालपराक्रमायनमः ९८ ॐ सर्वापत्तार॰ ९९ ॐ दुर्गायनमः १०० ॐ दुष्टभूतनिषेवितायनमः १०१ ॐ कामिनेनमः १०२
ॐ कलानिधिनेनमः १०३ ॐ कांतायनमः १०४ ॐ कामिनीवशकृद्वयेनमः १०५ ॐ सर्वसिद्धिप्र॰ १०६ ॐ वैद्यायनमः १०७ ॐ प्रभवे
नमः १०८ ॐ विष्णवेनमः ॥ ॥ इतिबटुकोपा॰ध्यायेबटुकभैरव अष्टोत्तरशतनामनिरूपणंप्रकरणं ॥१२॥ ॥

॥ श्रीबटुकभैरवपटलं ॥ ॥ दृष्ट्वातंत्राण्यनेकानि हरिकृष्णेनधीमता ॥ श्रीमद्बटुकनाथस्य पटलंवक्ष्यतेधुना ॥१॥ तत्रादौशिवा-
गमसारे ॥ कदाचित् गिरिजाशंभुंपपृच्छोपासनाविधिं ॥ येनेदंसर्वलोकानांमनेप्सितफलंभवेत् ॥२॥ श्रीपार्वत्युवाच ॥ प्राणनाथजग-
न्नाथजगदादिजगन्मय ॥ शंभोशंकरदेवेशबटुकाराधनंवद ॥३॥ एकादशसहस्रंतु भजनंहितयोदितं ॥विधिस्तस्यविशेषेणब्रूहित्वं
शंकरोधुना ॥४॥ शिवउवाच ॥ सम्यक् पृष्टंत्वयादेवीलोकदुःखविमोचनं ॥ मयाबटुकरूपंहिधृतंसर्वसुखावहं ॥५॥ अन्यदेवास्तु-
कालेनप्रसन्नासंभवंतिहि ॥ बटुकः सेवितः सद्यः प्रसीदतिध्रुवंशिवे ॥६॥ दुःखेचसेवितःशीघ्रं दुःखंनाशयतेक्षणात् ॥ सुखेचसेवितोनि-
त्यंसुखंवर्द्धयतेबहु ॥७॥ तस्मात्सेव्योनरैश्चायंसर्वकामफलायवै ॥सेवोपायंप्रवक्ष्यामियथासिद्धिर्भवेत्ध्रुवं ॥८॥ तंतंविधिंचने-
वाश्रियंयंकृत्वानरः शुचिः ॥नानाविधंफलंप्राप्य विजयीजायतेसदा ॥९॥ ब्राह्म्यंमुहूर्तंसंप्राप्यसमुत्थाय गुरुंस्मरेत् ॥ स्वीयंनि-
त्यविधिंकृत्वाबटुकोपासनंचरेत् ॥१०॥ शुचौदेशेस्वयंस्थित्वापद्मासनंविधायच ॥पीठेपलाशजेवाथशमिजेताम्रजेशिवे ॥११॥ जा-
ववेवेतसेजातेस्थित्वावैजपमाचरेत् ॥ अथमृगत्वचंश्रेष्ठंव्याघ्रचर्मसुशोभनं ॥ ऊर्णामयंविचित्रंवास्थापयेत्तुपुरस्तदा ॥ सप्तधातुमये
पीठेताम्रजेवापटेशुभे ॥१३॥ संस्थाप्यतत्रतद्यंत्रंध्यात्वातत्रबटुंप्रिये ॥ एतद्यंत्रंप्रवक्ष्यामियंत्रेदेवंचपूजयेत् ॥१४॥ त्रिकोणंचपु-
राकृत्वाषट्कोणंचततोन्यसेत् ॥ ततश्चवलयंकृत्वाचतुष्कोणंततोचरेत् ॥१५॥ मध्यदलंसमारभ्य मंत्राक्षराणिपूरयेत् ॥ उपरी-
तानिसव्येनसर्वाणिपूरयेत्क्रमात् ॥१६॥ उर्वरीतदलेतत्रलक्ष्मीबीजंन्यसेत्तदा ॥ दिग्पालांश्चसमारोप्यकोणेष्टभैरवंन्यसेत् ॥
१७॥ एवंयंत्रंचसंपूज्यस्वस्थोभूत्वाजपेन्नरः ॥ अथात्रविशेषोअग्रेचास्ति आपदुद्धारमंत्रस्यमूलविद्यांशृणुप्रिये ॥१८॥ प्रणवं
पूर्वमुद्धृत्यदेवीप्रणवमुद्धरेत् ॥ बटुकायेतिवैपश्चादापदुद्धारणायच ॥१९॥ कुरुद्वयंततः पश्चाद्बटुकायपुनर्वदेत् ॥ देवीप्रणवमुद्धृ-
त्यमंत्रोद्धारमिमंप्रिये ॥ २०॥ एकविंशतिवर्णास्तुमंत्रेसत्यंप्रकाशिताः ॥ लक्षमेकंजपेन्मंत्रंहोमंकुर्याद्यथाविधि ॥ २१ ॥ मंत्राक्ष-
राणांसख्याकैस्तंतुभिर्ब्रह्मसूत्रजैः ॥ वर्त्तिकृत्वाघृतेनैवदीपंतत्रप्रदापयेत् ॥२२॥ तैलेनवाप्रकुर्वीतदीपदानविधानतः ॥ बलिं-

न्यासविधिंकृत्वाध्यानंकुर्याद्यथोक्तवत् ॥ २३ ॥ यथाकामेततथाध्यानंकारयेत्साधकोत्तमः ॥ क्रूरकार्येषुसर्वेषुध्यानंवैतामसंस्मृतं ॥२४॥
वश्येविद्वेषणेस्तंभेराजसंध्यानमीरितं ॥ सात्विकंशुभकार्येषुध्यानभेदःसमीरितः ॥२५॥ बालसुर्यांशुसंकाशंराजसंध्यानमुच्यते ॥ सा-
त्विकंश्वेतवर्णंचकृष्णंतामसमुच्यते ॥ २६ ॥ सर्वकामार्थसिद्ध्येराजसंध्यानमुच्यते ॥ सात्विकंमुक्तिदंप्रोक्तंशोकनाशायतामसं ॥ २७ ॥ चौ-
रशत्रुंक्षयकरंविषप्रलयनाशनं ॥ ग्रहभूतपिशाचानांसर्वविघ्नविनाशनं ॥ २८॥ एवंध्यात्वाविशेषेणकृष्णवर्णप्रशस्यते ॥ त्रिनेत्रंरक्तवर्णं-
चवरदाभयहस्तकं ॥२९॥ सव्येत्रिशूलमभयंकपालंवरमेवच ॥ रक्तवस्त्रपरीधानंरक्तमाल्यानुलेपनं ॥३०॥ नीलग्रीवंचसौम्यंचसर्वाभर-
णाभूषितं ॥ इतितामसं ॥ राजसंसात्विकंचैवध्यात्वामृत्युंजयोभवेत् ॥ ३१ ॥ तुषारकर्णिकाभासंमायारूपमनंतकं ॥ मूर्द्धिखंडेंदुश-
कलंत्रिनेत्रंशांतिलोचनं ॥ ३२ ॥ सर्वकारणकर्त्तारंद्विभुजंरत्नभूषितं ॥ कपालंवामहस्तेचसूक्ष्मदंडंचदक्षिणे ॥ ३३ ॥ पादनूपूरसंयुक्तं
छिन्नशीर्षविभूषितं ॥ सर्पमालासमायुक्तंहस्तोरुस्थूलजानुषु ॥ ३४॥ आंत्रमालासमायुक्तंसर्वाभरणभूषितं ॥ एवंध्यात्वाजपेद्देवंसर्व-
मृत्युंजयोभवेत् ॥३५॥ सर्वकामप्रदातारंसर्वयोगफलप्रदं ॥ सर्वज्ञानस्यसंप्राप्तिसात्विकंचोत्तमंभवेत् ॥ ३६॥ इतिराजसं ॥ श्वेतव-
र्णंचतुर्बाहुंजटामुकुटधारणं ॥ भुजंगपाशहस्तंचहस्तेदंडकमंडलु ॥३७॥ शुक्लयज्ञोपवीतंचशुक्लकौपीनवाससं ॥ शुक्लवस्त्रपरीधानं
श्वेतमालानुलेपनं ॥३८॥ त्रिनेत्रंनीलकंठंचमुक्ताभरणभूषितं ॥ विद्याकामोमुक्तिकामोध्यायेच्चैवविशेषतः ॥३९॥ वर्णेननीलमेघाभंमु-
क्तकेशंत्रिनेत्रकं ॥ दिगंबरंचरौद्रंचशिरोमालाविभूषितं ॥ ४०॥ किंकिणीमालयायुक्तंभीमरूपंभयापहं ॥ नागंपाशंचघंटांचवरदंवामहस्त-
के ॥४१ ॥ डमरूखड्गत्रिशूलमभयंदक्षिणेकरे ॥ सुशब्दंभीमनादंचसर्वपुष्पैरलंकृतं ॥४२॥ सर्वाभरणकर्त्तारंसर्वव्याधिविनाशनं ॥ अ-
न्येवैध्यानभेदाश्चस्तवराजेप्रकीर्तिताः ॥ ४३॥ कोटिशकोटीप्रदेशे पूर्वोक्तस्यचमंत्रस्यबृहदारण्यकोऋषिः ॥ अनुष्टुप्छंद इत्युक्तंभैरवो
देवताशिवे ॥४४॥ शक्तिबीजंवशक्तिश्चआकीलकमुदाहृतं ॥ आद्यक्षरयुगंदेवीपंचह्रस्वान्वितंकुरु ॥ ४५॥ सत्वादिप्रातिलोम्येननपुंस-
कविवर्जितं ॥ एतद्बीजद्वयाद्यास्तुन्यस्तव्याःपंचमूर्त्तयः ॥४६॥ अंगुष्टादिष्वंगुलीषुमूर्द्धास्यहृदयेषुच ॥ सगुह्यचरणेष्वेवंमूर्द्धास्येदक्षकर्णके

॥४७॥ वामकर्णेचचूडाधस्तूर्द्धपूर्वांतकोन्तमः ॥ पश्चिमेपिचवक्त्रेषुमूर्त्तयस्तामहेश्वरी ॥ ४८॥ ईशानाख्यस्तत्पुरुषो घोरोदेवीतृतीयकः ॥
वामदेवश्चतुर्थः स्यात्सद्योजातस्तुपंचमः ॥ ४९ ॥ पुनराद्यर्णयुगलंषड्दीर्घस्वरभेदितं ॥ कृत्वातैस्तुषडंगानिजातियुक्तानिकल्पयेत् ॥ ५० ॥
**रुद्रयामले** ॥ **देव्युवाच** ॥ देवदेवजगन्नाथशंभोस्त्रैलोक्यनायक ॥ भैरवस्यविधिर्भूयोममाचक्ष्वमहामते ॥ ५१॥ येनकार्याणिसिध्यंति
साधकानांनिरंतरं ॥सुगोप्यमपिदेवेशविधिंप्रब्रूहिशंकर ॥५२॥ यतोहंतेप्रियादेवसदावर्त्तेनिरंतरं ॥ ततः कृपांसमाधायविधिंकथयशोभनं ॥
५३॥ **शिवउवाच** ॥ शृणुदेवीप्रवक्ष्यामिबटुकस्यमहात्मनः ॥ विधानंपरमंगोप्यंब्रह्मादीनांसुदुर्लभं ॥५४॥ मंत्रेणैवसुसंक्षेपात्कथ-
यिष्यामिवल्लभे ॥येनविज्ञानमात्रेणत्रैलोक्यंसाधयेत्सुधीः ॥ ५५ ॥ एकदादेवदेवेशीतपसेमंदराचलं ॥ गतोहंपरमानंदान्मूलप्रकृतिमीश्वरीं
॥५६॥ चक्रेपरमसंतुष्टांतपसाभावितात्मना ॥ साकाशरूपिणीदेवीप्रोवाचवचनंमुदा ॥५७॥ तुष्टाहंशंकरप्रीतावरंवरयदुर्लभं ॥ शि-
**वउवाच** ॥ बटुकस्यविधानंमेपरमंभक्तितोवरं ॥५८॥ परमाज्ञयान्मंत्रस्ययेनसिध्यतिसर्वथा ॥ मनोरमाणिमंत्रस्यसर्वकार्याणिसांप्रतं ॥
॥५९॥ इतिवाक्यंचमेश्रुत्वामूलभूतासनातनी ॥ उवाचयादृशंदेवीविधानंशृणुवल्लभे ॥६०॥ बटुकाख्यस्यदेवस्यभैरवस्यमहात्मनः ॥ ब्रह्मविष्णु
महेशाद्यैर्वंदितस्यदयानिधेः ॥ ६१ ॥ न्यासाएकादशप्रोक्ताबटुकाराधनेशिवे ॥ यान्विनानैवसिद्धिः स्याद्वर्षाणामयुतैरपि ॥६२॥ प्रथमः प्रेतबी-
जेनसिंहबीजेनचापरः ॥क्षाणबीजेनसत्यायाः श्रीबीजेनततः परं ॥६३॥ प्राणबीजेनवैन्यासान्कुर्यात्तत्रविचक्षणः ॥ घंटाबीजेनचन्यासंविधा-
यख्यातिबीजतः ॥६४॥ मूलबीजेनपश्चाच्चन्यासंकृत्वामहामतिः ॥ भ्रामरीबीजतोन्यासंविदध्यान्प्रीतिसंयुतः ॥६५ ॥ एवंन्यासान्दशादौ-
तुनकरोतिनरोयदा ॥वांछयेद्वंवरारोहेतावन्मंत्रोनसिध्यति ॥६६॥ **श्रीदेव्युवाच** ॥ देवदेवजगन्नाथशंभोः संसारतारक ॥ कृपांकृत्वान्यास
विधिंब्रूहियेनसुखंभवेत् ॥६७॥ कालेनेहयथाल्पेनसाधकः सिद्धिमाप्नुयात् ॥ गोपनीयोनमंत्रोयंबटुकाख्योजगद्गुरो ॥६८॥ तथानिरूपयवि-
भोबालकोपियथालभेत् ॥ **शिवउवाच** ॥ शृणुदेवीजगत्पूज्येन्यासबीजानिशोभने ॥६९॥ प्रकटानियथाशश्वत्कथयामिहितायते ॥ स्था-
नेषुयेषुबीजानिन्यस्तव्यानिमहात्मभिः ॥७०॥ तथात्रप्रदर्शिष्यामिशृणुमत्प्राणवल्लभे ॥ शिवचंद्रशिवैः शक्रस्वरोपेतैः सबिंदुभिः ॥ ७१ ॥

प्रेतबीजं समाख्यातं तेनांगानि न्यसेद्वपट् ॥ हृच्छिरश्च शिखा नेत्र कवचास्त्र पुसुंदरी ॥७२॥ शिवोहः ।चंद्रः सः ।शक्रस्वर औं । हसहौं । तथा ॥ शिवचंद्रौ ससंवर्त्तौ वामनेत्रविभूषितौ ॥ बिंदुनादयुतौ देवी न्यासंसांनिध्यकारकं ॥७३॥ सिंहबीजमिदं देवि विन्यसेत्सुरसुंदरी ॥ संवर्त्तः क्षः तेन हसक्षैं ॥ तथा ॥ मूर्ध्नि बाह्वोश्च लिंगे च नाभौ हस्तांगुलीषु च ॥७४॥ पादांगुलीषु देवेशी विन्यसेत्परमेश्वरि ॥ अजेशोग्निसमारूढः शक्रस्वरशशीयुतः ॥७५॥ क्राणबीजमिदं प्रोक्तं विन्यसेत्परमेश्वरी ॥ अजेशः झकारः । अग्निरेफः ।शशीबिंदुः ।तेनझ्रौं ॥तथा॥ ब्रह्मरंध्रे मुखे नेत्रयुग्मे ग्रीवानसोरपि ॥७६॥ कपोलयोश्च चिबुके ब्रह्मरंध्रे पुनर्न्यसेत् ॥ कालः शक्रः शिवो सद्या बिंदुनादविभूषिताः ॥७७॥ सत्याबीजं महेशानि विन्यसेदंगके बुधः ॥ कालः मः । शक्रः लः ।शिवोहः । सद्यः ओ । बिंदुनादविभूषिता तेन मलहों । तथा । पादयोर्हस्तयोश्चैव वदने करयोस्तथा ॥७८॥ नेत्रयोः श्रोत्रयोः कुक्ष्योर्मेढ्रे चैव प्रविन्यसेत् ॥ अस्थ्याग्निवामकर्णेंदुनादै देवी समीरितं ॥७९॥ महाश्रीबीजमीशानि चिबुकादिषु विन्यसेत् ॥ अस्थिशः । अग्निरः ।वामकर्णऊ ।इंदुनादौ पूर्ववत् ।तेन श्रूं । चिबुके पादयोश्चैव कर्णयोर्हृदये तथा ॥८०॥ वदने च तथा पादद्वये नाभौ च पादयोः ॥ लोहिताग्न्यासनो वामकर्णेंदुभिरथाद्रिजे ॥८१॥ प्राणबीजमिति ख्यातं हृदादिषु प्रविन्यसेत् ॥ लोहितः यः । अग्निरः । आसनः वामकर्णः ऊ ।इंदुः तेन मूं ॥ हृदये च मुखे देवी हृदये नाभीमंडले ॥८२॥ हृदये पादयोर्देवी हृदये सव्यकुक्षिके ॥ हृदये वामकुक्षौ च हृदये दक्षपत्तले ॥ हृदये वामपादे च हृदये विन्यसेत्प्रिये ॥ कतुरीयोग्निमारूढो वामकर्णेंदुनादवान् ॥८४॥ घंटाबीजं महादेवी विन्यसेत्परमेश्वरी ॥ कतुरीयः घः । अन्यत् प्राग्वत् तेन घ्रूं ॥ घंटिकायां च नाभौ च घंटिकायां हृदि न्यसेत् ॥८५॥ चंडेशो वायुवन्ह्याढ्यो वामकर्णेंदुनादवान् ॥ ख्यातिबीजमिति प्रोक्तं विन्यसेद्देवि साधकः ॥८६॥ चंडेशः खः ।वायुर्यः ।वन्ह्यादि प्राग्वत् । तेन ख्य्रूं ॥ मस्तके पादयोश्चैव ग्रीवायां नाभिमंडले ॥८७॥ गले च हृदि देवेशी जंघयोर्नेत्रयोस्तथा ॥ कर्णयोर्बाहुयुग्मे च स्तनयोश्च न्यसेत्प्रिये ॥८८॥ तथा ॥ प्रणवो मूलबीजं तु तत् वदने पादयोः प्रिये ॥ हस्तयोः कर्णयोर्नासायुग्मे चैव प्रविन्यसेत् ॥८९॥ द्विरंडरेवतीशक्रचंद्रहंसत्रिमूर्त्तिभिः सबिंदुनादैर्देवेशी भ्रामरीबीजमीरितं ॥९०॥ द्विरंडः भः ।रेवतीरः ।शक्रः लः ।चंद्रः सः ।हंसः हः ।त्रिमूर्त्तिः ई। बिंदुनादौ प्राग्वत् ।

तेन। भरलसहीं ॥ मुखेनेत्रद्वयेकर्णद्वयेचैवकपोलयोः ॥ गंडयोः कंठदेशेच स्तनयोर्हृदिपादयोः ॥ ९१॥ चिबुकेमस्तकेबाह्वोस्कंधयोर्दंतले-
खयोः ॥ ब्रह्मरंध्रेतथाऽऽधारे भ्रूमध्येचन्यसेत्प्रिये ॥९२॥ इतिन्यासान्समाधाय पुरश्चरणकारकः ॥ यथोक्तन्यासकारीच यदिनोवरमाप्नुयात्
॥९३॥ तदाकन्यादूषणोत्थंममपादंप्रजायतां ॥ न्यासैरेतैर्वरारोहेब्रह्महत्याविनश्यति ॥९४॥ काकथान्यस्य पापस्य सत्यंसत्यंवदामिते ॥ मम-
न्यासानथोवक्ष्येत्रीन्देवस्य महात्मनः ॥९५॥ यान्विधायनरोविंदेत्सिद्धिर्लोकेषु दुर्लभां ॥ आकूतबीजंविन्यस्येन्मस्तकेगंडयोर्मुखे ॥९६
॥ कालबीजंचक्षुषोश्चकर्णयोरपिविन्यसेत् ॥ नाभौलिंगेगुदेवापिविद्याबीजंकपालयोः ॥९७॥ ब्रह्मरंध्रेदंतपंक्तौविन्यसेत्साधकोत्तमः ॥
**श्रीदेव्युवाच** ॥ भगवन्करुणासिंधोदीनबंधोजगद्गुरो ॥९८॥ कृपांकृत्वासमाख्याहिसूत्रैरेवपृथक्पृथक् ॥ साधकस्तुयथासिद्धिम-
चिरेणैवविंदति ॥९९॥ **श्रीमहादेवउवाच** ॥ शृणुदेवीप्रवक्ष्यामिन्यासत्रयविधिंपृथक् ॥ दीर्घकालाग्निशक्राणामधः कालानलांत्यकाः ॥
१००॥ वन्ह्यस्थिवह्निगगनंचंद्रोवामाक्षिमंडितः ॥ बिंदुनादसमाक्रांतंबीजमाकूतमुधृतं ॥१०१॥ दीर्घनिः । कालः मः । अग्निः रः । शक्रः
लः । कालोमः । अनलोरः । अंत्यः क्षः । वन्हिः रः । अस्थिशः । वन्हीःरः । गगनंहः । चंद्रः सः । वामाक्षीई । बिंदुनादौप्राग्वत् । तेन । नम-
रलमरक्षशरहंसी इतिजातं । तया । शिरसिगंडयोर्वक्त्रे वेदबीजंप्रविन्यसेत् । ब्रह्माग्नींद्रेंद्वग्निकालवन्हिवामाक्षिभिः प्रिये ॥१०२॥ सबिं-
दुनादैर्देवेशीकालबीजमितीरितं ॥ ब्रह्माकः । अग्निरः । इंद्रः लः । इंदुः सः । अग्निरः । कालः मः । वन्हिरः । वामाक्षीई । बिंदुनादौप्राग्वत् ।
तेन । करलसरमरीं इतिजातं ॥ नेत्रयोः कर्णयोर्नाभिलिंगगुदेषुविन्यसेत् ॥१०३॥ तथा ॥ संवर्त्तानलचन्द्राग्निशिवचंद्रत्रिमूर्तिभिः ॥
सबिंदुनादैर्देवेशीविद्याबीजंसमुधृतं ॥१०४॥ संवर्त्तःक्षः । अनलः रः । चंद्रः सः । अग्निः रः । शिवोहः । चंद्रः सः । त्रिमूर्त्तिः ई । बिंद्वादि
प्राग्वत् ॥ तेनक्षरसरहसीं । जातं ॥ कपोलयोर्ब्रह्मरंध्रेदंतपंक्त्योश्चविन्यसेत् ॥ एतन्न्यासत्रयंप्रोक्तंसाधकाभीष्टसिद्धिदं ॥१०५॥ य-
स्यप्रसादमासाद्यसाधकः शीघ्रसिद्धिदः ॥ शृणुदेविप्रवक्ष्यामिशृंखलान्यासमुत्तमं ॥१०६॥ यस्यप्रसादाच्चशिवेबटुकः सिद्धिदोभ-
वेत् ॥ मस्तकेदक्षनेत्रेचवामनेत्रेतथैवच ॥१०७॥ दक्षकर्णेवामकर्णेकपोलेदक्षिणेतथा ॥ वामकपोलेदक्षेचगंडकेवामकेपुनः ॥१०८॥

चिबुकेथगलेस्कंधेदक्षिणेवामकेतथा ॥ स्तनेदक्षेऽथवामेच हृदयेदक्षकुक्षिके ॥ १०९॥ वामकुक्षौचनाभौच वक्षोजंघेचवामके ॥ लिंगेमेंढ्रे दक्षिणेचवामेचवरवर्णिनी ॥११०॥ मेंढ्रशब्दोवृषणवाचीदक्षवामनिर्देशात् ॥ लिंगस्योक्तत्वाच्चेति ॥ मूलाधारेदक्षगुल्फे वामगुल्फे तथैवच ॥दक्षपादेचवामेचदक्षपादांगुलीषुच ॥१११॥ वामपादांगुलिष्वेवं ब्रह्मरंध्रे तथैवच ॥ मूलाधारेपुनश्चैवं पुनर्वैब्रह्मरंध्रके ॥११२॥ महापराख्यंबीजंचविन्यसेत्साधकोत्तमः ॥ चन्द्रसूर्यौपुनस्तोच महीब्रह्ममहीप्रिये ॥११३॥ त्रिमूर्त्तिरंबुवन्ह्यंबु वन्ह्यंबुधरणीजलं ॥ षष्टस्वरत्रिमूर्त्तिंदुनादभूषितमस्तकं ॥११४॥ महापराख्यबीजंतेकथितंसुरवंदिते ॥ चन्द्रसूर्ये सहौ पुनस्तो सहौ महीलः । ब्रह्माकः । महीलः ।त्रिमूर्त्तिः ई । अस्थिशः । वन्हिः रः । अंबुवः । वन्हिःरः । अंबुवः । धरणीलः ।जलंवः । षष्टस्वरः ऊ । त्रिमूर्त्तिई बिंदुनादौ प्राग्वत् । तेन । सहसहलकईशरवरवलवऊईं ॥ न्यासेनानेनसुश्रोणिसाक्षाच्छिवसमोभवेत् ॥११५॥ बटुकस्याथवक्ष्यामिमातृकान्यासमुत्तमं ॥ कृतेनयेनबटुकः साधकस्यकरेभवेत् ॥११६॥ श्रीबीजैः पंचभिर्यच्चमातृणांमंडलंभवेत् ॥ प्रोक्तमादौतथाचांतेठांतेफांतेलसांतके ॥ ॥११७॥ बटुकस्यपरंपूज्यंमातृकान्यासमुत्तमं ॥ विज्ञायसाधयेत्प्राज्ञःससद्यःशिवतांव्रजेत् ॥११८॥ विनैमंमातृकान्यासंयोन्येनन्यासमाचरेत् ॥ बटुकस्तस्यकुपितः सद्यःशापंप्रयच्छति ॥११९॥ तस्यन्यासः प्रकर्त्तव्यः साधकेनविपश्चिता ॥ सर्वेषुमातृस्थानेषुवपुःपावनहेतवे ॥१२०॥ मातृकान्यासमेनंहित्यक्त्वाऽन्यंन्यासमाचरेत् ॥ वर्षकोटिप्रयत्नेनससिद्धिंनैवविंदति ॥१२१॥ ङकारमादौसंयोज्यसर्वंपूर्ववदाचरेत् ॥ अयमंतर्मातृकाख्योन्यासः स्यात्पूर्वसिद्धिदः ॥१२२॥ ॐकारमादिमंकृत्वान्यासोयंवरवर्णिनी ॥ नाम्नाबहिर्मातृकाख्योन्यासश्चूडामणिर्भवेत् ॥१२३॥ ध्यानानिपूर्ववद्देवी कथितानिमहामते ॥ अथान्यंन्यासमाख्यास्येशृणुष्ववरवर्णिनी ॥१२४ ॥सरस्वतीमातृकाख्यंसद्यःसिद्धिप्रदायकं ॥ न्यसेन्महामतेबीजंमातृकास्थानकेषुच ॥१२५॥ महासरस्वतीदेवीसद्यःसिद्धिप्रदायका ॥ क्रोधीशाधःपिनाकीशोदारकेशभुजंगकैः ॥१२६॥ भृग्वीशनकुलीशौचभुजंगोनकुलीशिवे ॥ संवर्त्तबकरेवत्यस्त्रिमुर्त्तिंदुविभूषिताः ॥१२७॥ महासरस्वतीबीजंकथितंदेवदुर्लभं ॥ क्रोधीशः कः । पिनाकीशः लः । दारकेशोडः । भुजंगः रः । भृग्वीशः सः । नकुलीशो-

ह्नः । भुजंगः रः । नकुलीशोहः । सवर्न्तः क्षः । बकः शः । रेवतीरः । त्रिमूर्त्तिर्ई ॥ इंदुः बिंदुः । तेन । कलडरसहरक्षशरईं इतिजातं ॥ इमेन्यासाः समाख्याताः वटुकाराधनेशिवे ॥१२८॥ सद्यः सिद्धिकरादेवी भाग्यलभ्यानसंशयः ॥ न्यूनन्यासस्यकर्त्तायः सद्योहानिमवाप्नुयात् ॥१२९॥ एतस्मादधिकन्यासान्यस्तव्याजन्मनितथा कोटीशकोटिप्रदेशे एवंन्यस्ततनुर्देवीध्यायेद्बटुकभैरवं ॥१३०॥ शुद्धस्फटिकसंकाशंद्विनेत्रोत्पलशोभितं ॥ कुटिलालकसंवीतंचारुस्मेरमुखांबुजं ॥१३१॥ नानारत्नमयैःकल्पैःकिंकिणीजालनूपुरैः ॥ दीप्तंशुचांबरावीतंद्विभुजंदक्षिणेकरे ॥१३२॥ त्रिशिखंसव्यहस्तेचदधानंदंडमद्भुतं ॥ बटुवेशधरंशंभुंसात्विकंसाधकःस्मरेत् ॥१३३॥ रुद्रयामलेतु ॥ कपालंवामहस्तेतुसूक्ष्मदंडंकमंडलुं ॥एवंध्यात्वायजेद्देवंशैवेपीठेसुरेश्वरी ॥१३४॥ अष्टपत्रंमहादेवीकर्णिकाकेसरोज्वलं ॥ पद्मंविरच्यतन्मध्येकर्णिकायांसुरेश्वरी ॥१३५॥ कृत्वाषट्कोणमस्यांतास्त्रिकोणंपरिकल्पयेत् ॥ तन्मध्येपद्मकंकुर्यात् व्योमपत्रविराजितं ॥१३६॥ कर्णिकाकेसरैर्युक्तंतन्मध्येबटुकंयजेत् ॥ मूर्तिंमूलेनसंकल्प्यतस्यामावाह्येत्प्रभुं ॥१३७॥ सद्योजातेनमंत्रेणमूलाद्येनमहेश्वरि ॥ स्थापयेद्वामदेवेनमूलाद्येनचसुव्रते ॥१३८॥ संनिधाप्याथमूलेनकेवलेनस्वमुद्रया ॥ अघोरांतेनमूलेनसंनिरोधनमाचरेत् ॥१३९॥ मूलेनसन्मुखीकुर्यादवगुंठ्याथमूलतः ॥ षडंगैः शकलीकृत्यामृतीकृत्यचमूलतः ॥१४०॥ परमीकरणंचैवस्वस्वमुद्राभिरर्चयेत् ॥एतत्सर्वंविधातव्यंततोध्यानंसमाहितः ॥१४१॥ कृत्वासुस्थापनंतस्यमुद्राः संदर्शयेदथ ॥ लिंगाद्याःपूर्वमुद्दिष्टायोनिमुद्रातथांतिमा ॥१४२॥ तांदर्शयेत्तत्पुरुषमूल्याभ्यांचमहेश्वरि ॥ आसनाद्यैश्चपुष्पांतैरुपचारैस्ततोर्चयेत् ॥१४३॥ ततोदेवाज्ञयासम्यक्यजेदावृत्तिदेवता ॥ न्यासस्थानेषुदेवस्यदेहेंगानिसमर्चयेत् ॥१४४॥ देवस्यदेहेदेवेशीपंचमूर्तीर्यजेत्क्रमात् ॥ अंगुलीदेहवक्त्रेषुत्रिविधन्यासमार्गतः ॥१४५॥ कर्णिकायांयजेत्पश्चात्पूर्वदक्षोत्तरेषुच ॥ पश्चिमेदेवमूर्तौंचव्योमपद्मदलेष्वथ ॥१४६॥ असितांगंरुरुंचंडंक्रोधमुन्मत्तभैरवं ॥ कपालिनंभीषणंचसंहारंचसमर्चयेत् ॥१४७॥ षट्कोणेपुषडंगानियजेद्देवीयथाविधि ॥ ततोष्टदलपद्मांतःषट्कोणाद्बहिरद्रिजे ॥१४८॥ पूर्वादीशानपर्यंतंवक्ष्यमाणान्समर्पयेत् ॥ डाकिनीपुत्रकान्देवीराकिनीपुत्रकानपि ॥१४९॥ शाकिनीपुत्रकान्भूयोहाकिनीपुत्रकांस्ततः ॥ मालिनीपुत्रकान्देवीदेवीपुत्राननंतरं ॥१५०॥ उमा-

पुत्रान् रुद्रपुत्रान् मातृपुत्रान्पीश्वरी ॥ वामभागेतु देवस्य यजेद्देवान्क्रमेणवै ॥१५१॥ इंद्रेशाग्निदिशोर्मध्ये उर्ध्वमुख्याःसुतान्जयेत् ॥ अ-
धोमुख्यासुतान् देवीयजेद्रक्षोजलेशयोः ॥१५२॥ अंतराले महेशानि पुत्रवर्गस्त्रयोदश ॥ **रुद्रयामले** ॥ रुद्रपुत्रानंतरं ॥ देशग्रामा
धिपोचैवस्थानाधिपमनुक्रमात् ॥ १५३ ॥ मेघनादंप्रचंडाग्रेकालदूतंतथैवचे त्युक्तंयथोपदेशमंत्रा अपीति ॥१५४॥ इत्थंसंपूज्य तद्बाह्ये
पद्मपत्रेषुपूजयेत् ॥ ब्रह्माणिपुत्रकंपूर्वे माहेशीपुत्रमीश्वरे ॥१५५॥ वैष्णवीपुत्रकंसौम्ये कौमारिपुत्रमानिले ॥ इंद्राणीपुत्रकंदेवीपश्चि-
मेपूजयेत्ततः ॥१५६॥ देवेशीनैरृते पश्चान्महालक्ष्मीसुतंयजेत् ॥ वाराहिपुत्रकं देवी दक्षिणेवन्हिकोणके ॥१५७॥ चामुंडापुत्रमभ्य-
र्च्यलोकेशबटुकंनमेत् ॥ अष्टपत्राद्बहिर्देवि चतुरस्त्रांतरेपुनः ॥१५८॥ अष्टदिक्षुयजेद्देवान् हेतुकंत्रिपुरांतकं ॥ वेतालमग्निजीव्हंचका-
लांतकमतःपरं ॥१५९॥ करालमेकपादंच भीमरूपंमहेश्वरी ॥ अभ्यर्च्येद्रेशयोर्मध्येजयेदचलमद्रिजे ॥१६०॥ हाटकेशं महेशानि
पाशीराक्षसयोस्तथा ॥ चतुरस्त्रादिरेखायांदिग्विदिक्षुसुरेश्वरी ॥१६१॥ अंतरालेषुवाभ्यर्च्येत्श्रीकंठादीन्सुरेश्वरी ॥ ततोद्वीतीय
रेखायांक्रोधीशादीन्सुरेश्वरी ॥१६२॥ आषाढ्यंतान्समभ्यर्च्यतृतीयायांसमर्चयेत् ॥ दंडीश्वरादिभृग्वंतान्लकुलीशादिकान्शिवे ॥१६३॥
देवस्यवामभागेतुपूजयेत्परमेश्वरी ॥ दिव्यंतरिक्षभूमिष्ठान् योगीशान्शक्तिसंयुतान् ॥१६४॥ योगिनीश्चसमभ्यर्च्येदीशानादिषुसुंदरी ॥ कोणे
षुदेवदेवेशी दिगीशानायुधैः सह ॥ १६५॥ चतुरस्त्रांष्टके देवीपूजयेदुक्त मार्गतः ॥ इतिसंपूजयेद्देवं बटुकं भक्तितत्परः ॥१६६॥ धर्मार्थकाम
मोक्षाणांप्राप्तिर्भवतिनिश्चयात् ॥ **अथशारदातिलके** ॥ उद्धरेद्बटुकंङेंतमापदुद्धारणंतथा ॥१६७॥ कुरुद्वयंपुनर्ङेंतंबटुकंतंसमुद्धरेत्
॥एकविंशत्यक्षरात्माशक्तिरुद्धोमहामनुः ॥१६८॥ अभीष्टफलसंसिध्यै कीर्त्तितः सुरपादपः ॥ बृहदारण्यकऋषिः छंदोनुष्टुबुदाहृतं ॥
॥१६९॥ आपदुद्धारणोदेवोभैरवोदेवताबुधैः ॥ अंगुलीदेहवक्रेषु मूर्त्तीन्यस्ययथापुरा ॥१७०॥ संणादिपंचह्रस्वाढ्यशक्तिबीजपुरःसरः ॥
चकारपंचह्रस्वाढ्यमीशानादिषुयोजयेत् ॥१७१॥ षट्दीर्घयुक्तयाशन्त्यावकारेणचतद्बतः ॥ अंगानिजातियुक्तानिप्रणवाद्यानिकल्प-
येत् ॥१७२॥ तस्यध्यानंत्रिधाप्रोक्तंसात्विकादिविभेदतः ॥ सात्विकंध्यानमाख्यातमपमृत्युनिवारणं ॥१७३॥ आयुरारोग्यजननमप-

वर्गफलप्रदं ॥ राजसंध्यानमाख्यातं धर्मकामार्थसिद्धिदं ॥१७४॥ तामसं शत्रुशासनं कृत्वा भूतमदापहं ॥ वर्णलक्षं जपेन्मंत्रं हविष्याशी जितेंद्रियः ॥१७५॥ तद्दशांशं च जुहुयात्तिलैर्मधुरसंयुतैः ॥ धर्माधर्मादिभिः क्लृप्ते पीठे पंकजशोभिते ॥१७६॥ षट्कोणांतस्त्रिकोणस्थं व्योमपंकजशोभिते ॥ बटुकं पूजयेद्देवं मूर्त्तिं मूलेन कल्पयेत् ॥१७७॥ सद्योजातेन मंत्रेण देवमावाहयेत्ततः ॥ मूलादिवामदेवेन स्थापयेत्परमेश्वरं ॥१७८॥ मूलमंत्रेण कर्तव्यं सान्निध्यं तदनंतरं ॥ अघोरेण सुधीः कुर्यात्संनिरोधमनंतरं ॥१७९॥ पुरुषाख्येन मनुना योनिमुद्रां प्रदर्शयेत् ॥ देवाय वदनं कुर्यादीशानेन समाहितः ॥१८०॥ एतत्सर्वं विधातव्यं तत्तन्मुद्राः प्रदर्शनात् ॥ ईशानादीन्यजेद्देवान्न्यासमार्गेण देशिकः ॥१८१॥ सकलीकरणं कृत्वा येन मूर्त्तिर्यथापुरा ॥ व्योमपद्मदलेष्वर्चेदसितांगादिभैरवान् ॥१८२॥ असितांगं रुरुं चंडं क्रोधमुन्मत्तभैरवं ॥ कपालिनं भीषणाख्यं संहारं चक्रमादमुन् ॥१८३॥ षट्कोणेषु षडंगानि क्रमेणाभ्यर्च्चयेत्सुधीः ॥ पूर्वादीशानपर्यंतं तद्बहिः पूजयेदिमान् ॥१८४॥ डाकिनीपुत्रकान्पूर्वं राकिनीपुत्रकांस्ततः ॥ लाकिनीपुत्रकान्पश्चात्काकिनीपुत्रकांस्ततः ॥१८५॥ शाकिनीपुत्रकान्भूयो हाकिनीपुत्रकान्पुरः ॥ याकिनीपुत्रकान्पश्चाद्देवीपुत्रांस्तथापरान् ॥१८६॥ अथो मारुद्रमातृणां पुत्रान् दक्षिणतो यजेत् ॥ उर्ध्वमुख्याः सुतान्मूर्ध्वमधोमुख्याः सुतानधः ॥१८७॥ इति संपूजयेन्मंत्री पुत्रवर्गास्त्रयोदश ॥ तद्बहिः पद्मपत्रेषु लोकेशबटुकान्यजेत् ॥१८८॥ ब्रह्माणिपुत्रकं पूर्वे माहेशीपुत्रमीश्वरे ॥ वैष्णवीपुत्रकं सौम्ये कौमारिपुत्रमानिले ॥१८९॥ इंद्राणिपुत्रकं भूयः पूजयेत्पश्चिमे ततः ॥ महालक्ष्मीसुतं पश्चाद्रक्षोदिशि समर्चयेत् ॥१९०॥ वाराहिपुत्रकं याम्ये चामुंडासुतमानिले ॥ बटुकान्दशदिक्ष्वर्चेद्धेतुकं त्रिपुरांतकं ॥१९१॥ वेतालवह्निजीवाख्यं कलानाख्यं करालकं ॥ एकपादं भीमदंष्ट्रमचलहाटकेश्वरं ॥१९२॥ दिशि दिक्ष्वंतरालेषु श्रीकंठादीन्यजेत्पुनः ॥ क्रोधीश्वरादीन्भृग्वंतान्तत्बाह्ये समर्चयेत् ॥१९३॥ ततस्त्रीन्कुलीशादीन् दक्षिणे पूजयेत्सुधीः ॥ दिव्यांतरिक्षभुमिष्ठान्योमीशान्शक्तिसंयुतान् ॥१९४॥ योगिनीभिः सहाभ्यर्च्चेदीशाग्निनिर्ऋतिस्थितान् ॥ इति संपूजयेद्देवं बटुकं प्रोक्तवर्त्मना ॥१९५॥ धर्मार्थकाममोक्षाणां पतिर्भवति मानवः ॥ विघ्नं दुर्गां समाराध्य बलिं दत्वा विधानतः ॥१९६॥ काम्यादीन्साधयेन्मंत्री यथोक्तसिद्धिमाप्नुयात् ॥ शाल्यन्नं पललं सर्पिर्लाजाचूर्णानि शर्करा ॥१९७॥ गुडमिक्षुरसापूपैर्मध्वक्तैः परिमिश्रितः ॥ कृत्वा ग्रासं समाराध्य देवं प्रागुक्त-

वर्त्मना ॥ १९८ ॥ रक्तचंदनपुष्पाद्यैर्निशितस्मैबलिंहरेत् ॥ ततः सिध्यंतिकार्याणिबलिनानेनमंत्रिणः ॥ १९९ ॥ जुहुयात्सर्पिषामंत्रीयथोक्तं
सिद्धिमाप्नुयात् ॥ वश्यायजुहुयाद्दिक्षुशकलैर्वशयेज्जनान् ॥ २०० ॥ जुहुयात्पुत्रलाभायप्रफुल्लैः करवीरजैः ॥ धनधान्यादिसंपत्त्यैजुहुया
त्तिलतंदुलैः ॥ २०१ ॥ बिल्वप्रसूनैर्जुहुयान्महतींविंदतेश्रियं ॥ लवणैर्मधुसंसिक्तैर्वशयेद्वनिताजनान् ॥ २०२ ॥ वृष्टिकामेनहोतव्यंवेतसा-
नांसमिद्वरैः ॥ अन्नेनजुहुयान्नित्यंधनधान्यादिसंपदे ॥ २०३ ॥ वश्यायजुहुयान्मंत्रीमधुनादिवसत्रयं ॥ रोगोक्तौषधहोमेनरोगान्नश्यं-
तितत्क्षणात् ॥ २०४ ॥ कृत्याद्रोहेग्रहद्रोहेभूतापस्मारसंभवे ॥ व्याघ्राजिनेसमासीनोजुहुयाद्युततिलैः ॥ २०५ ॥ भूतादयः पलायंते
त्यक्त्वेतांदिशंभयात् ॥ कृष्णाष्टमीसमारभ्ययावत्स्यात्तच्चतुर्दशी ॥ २०६ ॥ तिलैस्तंदुलसंमिश्रैर्मधुरत्रयलोलितैः ॥ त्रिसहस्रंप्रतिदिनं
जुहुयात्संस्कृतेऽनले ॥ २०७ ॥ बटुकेशंसमभ्यर्च्यभक्ष्यभोज्यफलान्वितः ॥ नित्यंनिवेद्यसमयेमध्यरात्रेबलिंहरेत् ॥ २०८ ॥ एवं
जपित्वाप्रयतः सहस्राण्येकविंशतिः ॥ समाप्तिदिवसेरात्रावजंहत्वाबलिंहरेत् ॥ २०९ ॥ ततः कारयितताराजातोषयेत्साधकंधनैः ॥
प्रयोगदिवसेनित्यंभक्ष्यभोज्यैः सदक्षिणैः ॥ १० ॥ विप्रान्सप्तमहादेवीतोषयेद्वांछितात्मये ॥ समाप्तिदिवसेविप्रान्सप्तसप्तसमाहितः
॥ २११ ॥ भोजयेद्वस्त्रवित्ताद्यैस्तोषयेज्जगदीश्वरी ॥ विधिनानेनसंतुष्टोबटुकेशः प्रयच्छति ॥ २१२ ॥ तेजोबलंयशः पुत्रान्कांतिल-
क्ष्मींमनोरमां ॥ नश्यंतिशत्रवः सर्वेवर्द्धंतेमित्रबांधवाः ॥ २१३ ॥ अवग्रहोनजायेतविषयेतस्यभूपते ॥ जुहुयात्केवलैर्लाजैरयुतंस्त्त
भनेच्छया ॥ २१४ ॥ निगडादिविमोक्षायप्रयोगोयमुदाहृतः ॥ वचाचूर्णपलंकृत्वागव्येनाज्येनलोलितं ॥ २१५ ॥ मंत्रयेन्मनुनातेनदे-
वीसाग्रंसहस्रकं ॥ विभजेच्चूर्णपंचाशद्भागेनपरमेश्वरी ॥ २१६ ॥ दिनशोभागमेकैकंभक्षयेद्गोघृतान्वितं ॥ विभज्यभक्षयेद्वंध्या
मंडलंपुत्रकांक्षिणी ॥ १७ ॥ विनीतपुत्रमाप्नोतिमेधारोग्यबलान्वितं ॥ दीर्घायुष्यंचवंध्यापिकिंपुनः कन्यकाप्रसूः ॥ २१८ ॥ आदा
वंतेप्रयोगस्यबटुकायबलिंहरेत् ॥ द्विविधोबलिराख्यातोराजसः सात्विकोबुधैः ॥ २१९ ॥ राजसोमांसरक्ताढ्यपलत्रयसमन्वितः
मुद्गपायससंयुक्तोमधुरत्रयसंयुतः ॥ २२० ॥ सात्विकोमांसरहितः शेषमन्यत्पुरोक्तवत् ॥ ब्राह्मणोनियतः शुद्धः सात्विकंबलिमा-

हरेत् ॥२२१॥ साधयेन्विधिनानेनभस्मसर्वार्थसिद्धिदं ॥ उशीरंचंदनंकुष्टंघनसारंसकुंकुमं ॥२२२॥ श्वेतार्कमूलवाराहिलक्ष्मीःक्षी
रमहीरुहां ॥ त्वचोबिल्वतरोर्मूलंशोषयित्वासुचूर्णयेत् ॥२२३॥ चूर्णंव्योम्निगृहीतेनगोमयेनविमिश्रितं ॥ कृत्वापिंडाभिसंशोष्यसं-
स्कृतेहव्यवाहने ॥२२४॥ मूलेनदग्धातद्भस्मशुद्धेपात्रेविनिक्षिपेत् ॥ केतकीमालतीपुष्पैर्वासयेद्भस्मशोभितं ॥ २२५॥ अयुतंप्र-
जपेन्मंत्रंस्पृष्ट्वाभस्मसुपूजितं ॥ एतदादायदिनशः प्रातःपुंड्रंकरोतियः ॥२२६॥ ब्राह्मणो। वेदविधिनात्रिपुंड्रंधारयेत्सुधीः ॥ शूद्रादे-
र्मूलमंत्रेणसर्वेवामूलमंत्रतः ॥ २२७॥ तस्यरोगाः प्रणश्यंतिकृत्याद्रोहमहाग्रहाः ॥ रिपुचोरमृगादिभ्योभयमस्यनजायते ॥२२८॥
वर्द्धंतेसंपदःसर्वाः पूज्यंतेसकलैर्जनैः ॥ राजावश्योभवेत्तस्यसामात्यःसपरिच्छदः ॥२२९॥ अभिषेकंप्रकुर्वीतराज्ञोविजयकांक्षिणः
॥पूर्वोक्तमंडपेक्लृप्तेवितानध्वजशोभिते ॥२३०॥ सर्वतोभद्रमालिख्यकर्णिकांतस्यपूजयेत् ॥ अष्टद्रोणप्रमाणेनशालिभिः शो-
धितैः शुभैः ॥२३१॥ तदर्धास्तंदुलास्तास्मिन्न्यस्यदूर्वाक्षतान्वितं ॥ हेमादिविहितंकुंभंनवरत्नसमन्वितं ॥ २३२॥ संस्थाप्यविम-
लैस्तोयैरापूर्यास्मिन्विनिक्षिपेत् ॥ क्षीरद्रुमप्रवालानिलक्ष्मीदूर्वासहायुतः ॥२३३॥ कर्पूरंचंदनंबिल्वंउशीरंकुंकुमंपुनः ॥ कंकोलम
गुरुंजातिंमल्लिकाचंपकोत्पलैः ॥२३४॥ गोमेददाडिमंपश्चात्पट्टसूत्रेणवेष्टयेत् ॥ तस्मिन्नावाह्यवटुकंराजसंसंप्रपूजयेत् ॥ २३५॥
बहिरष्टसुकुंभेषुभैरवानष्टपूजयेत् ॥ त्रयोदशेषुकुंभेषुत्रयोदशगणान्यजेत् ॥२३६॥ बाह्येदशसुकुंभेषुलोकेशानर्चयेत्सुधीः ॥
तद्बहिःष्वष्टकुंभेषुश्रीकंठादीनसुरेश्वरान् ॥२३७॥ पंचत्रिंशत्घटेष्वर्चेत्कादिवर्णेश्वरान्क्रमात् ॥ इतिगंधादिभिः सम्यक्पंचावर-
णमर्चयेत् ॥ २३८॥ अयुतंप्रजपेत्स्पृष्ट्वातान् घटान् देशिकोत्तमः ॥ पायसैः सर्पिषाशुद्धैस्तिलैर्दशशतंपृथक् ॥२३९॥ जुहुयात्ता
न्घटान्स्पृष्ट्वाप्रत्यहंबलिमाहरेत् ॥ राजसोक्तप्रकारेणरात्रौदेशिकसत्तमः २४०,सुदिनेशोभनेलग्नेवाचयित्वाद्विजातिभिः ॥स्व-
स्तिमंगलवाक्यानिविशुद्धैर्वेदपारगैः ॥२४१॥ नदत्सुपंचवाद्येषुप्रणम्यवटुकेश्वरं ॥ जितेंद्रियंशुद्धकायंराजानंब्राह्मणप्रियं ॥
॥२४२॥ आस्तिकंशुद्धवचनमभिषिंचेत्प्रसन्नधीः ॥ अभिषिक्तोनरपतिः प्रणिपत्यगुरुंपरं ॥ २४३ ॥ भूयसींदक्षिणांदद्यात्प्रसीद-

तियथागुरुः ॥ राजाभिषिक्तोभवतिसाक्षाद्भूमिपुरंदरः ॥२४४॥ परान्विजयतेभूपान्स्तूयतेसकलैर्नरैः ॥ भक्ष्यैर्भोज्यैर्धनैर्धान्यैः
पूजयंतियशस्विनः ॥२४५॥ कृत्वाभिषेकःषण्मासंप्रतिमासंमहीपतिः ॥ चतुरंभोधिवलयांशास्तिसर्वांवसुंधरां ॥ २४६॥ गजा-
श्वशांतिविधयेतेषांशालासुसाधकः ॥ कुंडंकृत्वाविधानेनहोमंकृत्वायथाविधि ॥ २४७ ॥ पायसाज्यतिलैर्विद्वानयुतत्रितयावधि ॥
ब्राह्मणान्भोजयेन्नित्यंभक्ष्यभोज्यफलादिभिः ॥ २४८॥ प्राक्प्रोक्तविधिनाकुंभान्स्थापयित्वात्रदेशिकः ॥ अभ्यर्च्यगंधपुष्पा-
द्यैस्तज्जलैःप्रोक्षयेद्गजान् ॥२४९॥ अश्वशालामनेनैववर्द्धतेसादिनेदिनं ॥ युद्धेषुमहतीशक्तिर्जायतेपूर्वतोधिका ॥२५०॥ स-
र्वेरोगाःप्रणश्यंतिकृत्याद्रोहाःपरैःकृताः ॥ अस्मात्परतरारक्षानास्तितेषांमहीतले ॥ २५१॥ अभिषिंचमहीपालंपरेषांविजयोद्यतं ॥
उक्तेनविधिनामंत्रीयामिन्यांबलिमाहरेत् ॥ २५२॥ अन्यूनागमजंहत्वाराजसंप्रागुदाहृतं ॥ बलिप्रदानसमयेरिपूणांसर्वसैन्यकं ॥
२५३॥ निवेशयेद्बलिस्तेनबटुकायविशिष्टधीः ॥ विदर्भयेच्छत्रुनाम्नाबलिमंत्रंयथासुधीः ॥२५४॥ शत्रुपक्षस्यरुधिरंपिशितंचदि-
नेदिने ॥ भक्षयन्स्वगणैःसार्द्धंसारमेयसमन्वितः ॥ २५५॥ बलिमंत्रोयमाख्यातःसर्वेषांविजयप्रदः ॥ अनेनबलिनाहृष्टोब-
टुकःपरसैन्यकं ॥२५६॥ सर्वेगणेभ्योविभजेदामिषंक्रुद्धमानसः ॥ एवंकृतेपरबलंक्षीयतेनात्रसंशयः ॥ २५७॥ विजयंश्रीय-
मेतेनराजाप्राप्नोत्ययत्नतः।२५८।श्रीमायास्मरकूटमंत्रंविलिखेन्मध्येदलेष्वष्टसु ह्रिंःप्रोक्तंबटुकायशब्दमपरान्मंत्रस्यवर्णान्बहिः अ-
ष्टद्वंद्वदलेषुतद्बहिरचन्तत्संख्यपत्रेष्वथद्वात्रिंशद्दलकादिसांतसहितंयंत्रंलिखेद्भूपुरे ॥ २५९ ॥ आपदुद्धारणंयंत्रमपमृत्युभयाप-
हं ॥सर्वसंपत्प्रदंनित्यंसर्वसौभाग्यदायकं ॥ रक्षाकरंमहार्तानांराज्ञांविजयवर्द्धनं ॥ २६० ॥ आपदुद्धारणादस्मादापदुद्धारणक्ष-
मः ॥मंत्रेषुनास्तिमंत्रोन्यइत्याहुर्मंत्रवेदिनः ॥ २६१॥ रुद्रयामले ॥ देव्युवाच ॥ भगवन्देवदेवेशरहस्यंबटुकस्यमे ॥ ब्रूहि
येनवशीकुर्युःसाधकाभैरवंशिव ॥२६२॥ श्रीशिवउवाच ॥ शृणुदेविपरंगोप्यंकथयामिसुशोभने ॥ रहस्यंसिद्धिदंसाक्षा
द्बटुकस्यमहात्मनः ॥ २६३॥ सर्वेबटुकदेवस्यसाधनेयेनिरूपिताः ॥ उपायानिष्फलाएवविनैकंवीरसाधनं ॥ २६४॥ येना

न्यसाधनंहित्वा उपायंचान्यमाश्रयेत् ।नससिद्धिमवाप्नोतिनरोवर्षशतैरपि ॥२६०॥ माषान्मुद्गान्मसूरांश्चचणकानोदनंतथा ॥
क्षीरंतथा पूपमपिशष्कुलीरपिशोभना ॥२६६॥ शष्कुलीसुहाली ॥ आदायसूत्रंकार्पासंकन्याकर्त्तितमेवच ॥ कुंकुमेनापिसंरज्य
कारयित्वाष्टकीलकान् ॥ २६७॥ स्तंभार्थमेकं कीलंच गृहीत्वासुरसुंदरी ॥ गच्छेत्स्मशाननिकटं सुधीः सोत्तरसाधकः ॥२६८॥
पादप्रक्षालनंकृत्वा ततःस्मृत्वास्वदेवतां ॥ बध्वांजलिमिदंवाक्यंप्रवदेत्साधकोत्तमः ॥ २६९॥ अत्रस्मशानेयाः काश्चिद्देवतानिवसं-
तिहि ॥ ताःप्रयच्छंतुमेसिद्धिं प्रसन्नाः संतुपांतुमां ॥ २७० ॥ पूर्वेमांशंकरः पातुतथाग्नेयांचशूलधृक् ॥ कपालीदक्षिणेपातु नैऋत्येज-
टिलोवतु ॥२७१॥ पश्चिमे पार्वतीनाथोवायव्येप्रमथाधिपः ॥उत्तरे मुंडमालोव्यादीशानेवृषभध्वजः ॥२७२॥ ऊर्ध्वंपातुतथाशंभु
रधस्ताद्धूलिधूसरः ॥ अग्रतोभैरवःपातु पृष्टतः पातुखेचरः ॥२७३॥ दक्षिणेभूचरःपातुवामेचपिशिताशनः ॥ केशान्पातुविशाला
क्षोमुर्द्धानंचमरुत्प्रियः ॥ २७४॥ मस्तकंपातुभृग्वीशोनेत्रेपातुमहामनाः ॥कपोलौपातु वीरेशोगंडौगंडाभिमर्दनः ॥२७५॥ उत्तरो-
ष्ठेविरूपाक्षोह्यधरेयोगिनीप्रियः ॥ अक्षेषुदक्षविध्वंसीचिबुकेतुकपालधृक् ॥ २७६॥ कंठेरक्षतुमांदेवोनीलकंठजगद्गुरुः ॥ दक्षस्कंधेगि-
रींद्रेशोवामस्कंधेवसुंजयः ॥२७७ ॥ दक्षिणेचभुजेसर्वमंत्रनाथः सदावतु ॥ वामेभुजेसार्वभौमो हृदयेपातुपांडुरः ॥२७८॥ दक्षस्तनेपशु-
पतिर्वामेपातुमहेश्वरः ॥ उदरेसर्वकल्याणकारकोवतुमांसदा ॥२७९॥ नाभौकामप्रविध्वंसीजंघेपातुदयामयः ॥जानुनिपातुजामि-
त्रोगुल्फौगौरिपतिःसदा ॥२८०॥ पादपृष्टेसामनिधिस्तथापादांगुलीर्हरः ॥ पादाधःपातुसततंव्योमकेशोजगत्प्रियः ॥२८१॥ इतिरक्षांस-
माधायमंत्ररक्षांततश्चरेत् ॥ ॐ ह्रां ह्रीं ह्रूं ह्रः पूर्वे ॥ ॐ ह्रिं ह्रुं ह्रों आग्नेये ॥ ॐ ह्रिं श्रिं दक्षिणे ॥ ॐ ग्लूं ल्लूं नगनगनैऋत्ये ॥ ॐ
ग्रूं भ्रूं घ्रूं सं सः पश्चिमे ॥ ॐ श्रां श्रां वायव्ये ॥ ॐ भ्रां फ्रां भैरव उत्तरे ॥ ॐ ब्रं ब्रूं भ्रूं फट् ईशान्ये ॥ ॐ ग्लौं ह्लूं ऊर्ध्वे ॥ ॐ घ्रां घ्रं घ्रः अ-
धोदेशे ॥एवंरक्षांसमाधायदिक्पालार्चनमाचरेत् ॥२८२॥ ततोवाक्यंपुनर्ब्रूयात्साधकःप्रीतिसंयुतः ॥ भां भैरव भैरवायनमः ॥ भां भैर-
वभैरवभयंकरहरमांरक्षरक्षहुंफट्स्वाहा ॥ इतिप्रार्थयित्वा ॥ २८३॥ एकस्मिन्भाजनेकृत्वापालाशस्यमहात्मनः ॥ सिद्धमाषान्

व्रजेत्प्राच्यांदिशिपूजार्थमादरात् ॥ २८४ ॥ तत्रस्थित्वातुपुटकं करेधृत्वाविचक्षणः ॥ मंत्रमेनसुधीः प्रोक्तादद्यादिंद्रायवैबलिं ॥२८५॥
ॐ ह्रां ह्रीं ह्रुं समुच्चार्यभोइंद्रसुरनायक ॥ प्रसन्नोभवमेशीघ्रंदेहिसिद्धिंसनातनीं ॥२८६॥ इमंबलिंगृह्णगृह्णहुंफडुच्चार्यसाधकः ॥
बलिंदत्वामहाभागेसिध्यर्थंप्राणवल्लभे ॥२८७॥ ततोरंरांसमुच्चार्यरूंरूंरींरींमपिप्रिये ॥ अग्नेक्रूंक्रूंमयादत्तंबलिंहुंफट्समुच्चरेत् ॥ २८८॥
मुद्गान्पात्रेसमाधायप्रदद्याद्बलिमादरात् ॥ ततोदक्षिणदेशांशेसमागत्यविचक्षणः ॥ २८९॥ ॐ प्रांप्रींप्रूंसमुच्चार्यतथाप्रांप्रीमितित्रिधा
प्रेतनाथपदस्यांतेबलिंगृह्णेतिचोच्चरेत् ॥ २९०॥ हुंफडंतोयमाख्यातोयममंत्रोवरानने ॥ अनेनदक्षिणेदेशेपात्रंमसूरपूरितं ॥ २९१॥ स्था-
पयित्वानमस्कृत्यनैरृत्यांशेततोव्रजेत् ॥ बलिंचएकपात्रस्यदद्यात्साधकसत्तमः ॥२९२॥ ॐ क्रेंक्रेंक्रेंसमुच्चार्यततोह्रूंह्रूंतथैवच ॥
खेंखेंखेंचततोब्रूयात्ततोह्रौंह्रौंसमुच्चरेत् ॥ २९३॥ रक्षोनाथपदंब्रूयाद्गृह्णहुंफट्समन्वितः ॥ अनेनमनुनादद्याद्रक्षोनाथबलिंबुधः ॥
२९४॥ ततःपश्चिमदेशस्थोभूत्वादेशिकसत्तमः ॥जलनाथायसुबलिंदद्यात्स्वस्यार्थसिद्धये ॥ २९५ ॥ ॐ ब्रांब्रींब्रूंसमुच्चार्यततोवरुणमु-
च्चरेत् ॥ बलिमेनंमयादत्तंगृह्णाणपरमेश्वर ॥ २९६॥ अनेनमंत्रवर्येणवरुणायोदनस्यच ॥ बलिंदद्यान्महाभागस्वार्थसिद्धयआदिशेत् ॥
२९७॥ वायुदेशंसमासाद्यततोवायोर्बलिंहरेत् ॥ पायसंपात्रमादायपरमादरसंयुतः ॥ २९८॥ ॐ वांवींवूंसमुच्चार्य ॐ ब्रांब्रींब्रूंतथैवच
॥ हुंफडंतोमनुरयंवायोः सिद्धिप्रदायकः ॥२९९॥ अनेनमनुनाप्राज्ञोवायवेबलिमाहरेत् ॥ ॐ कूंकूंकूंसमुच्चार्य ॐ क्रांक्रांक्रांसमुच्चरे-
त् ॥ ३०० ॥ हुंफडंतेनमनुनाबलिंदद्याद्विचक्षणः ॥ ऐशान्यांदिशिह्याश्रित्यसाधकप्रवरस्ततः ॥ ३०१॥ ईशानायबलिंदद्यात्सर्वकामार्थ
सिद्धये ॥ ॐ श्रांश्रींश्रूंसमुच्चार्य ॐ श्रांश्रांश्रांमथोच्चरेत् ॥३०२॥ हुंफडंतःसमाख्यातोमंत्रोयंलोकदुर्लभः ॥ अनेनमनुनादद्याच्छष्क-
लीपात्रसंस्थिता ॥ ३०३॥ बल्यर्थंसर्वकामार्थसिद्धयेसाधकोत्तमः ॥ एवमष्टबलीन्दद्यात्सर्वकामार्थसिद्धये ॥ ३०४॥ स्तंभाधोभा-
गमाश्रित्यकार्यमग्रेसमाचरेत् ॥ पुष्पाक्षतान्समादाय ॐ ह्रांह्रींह्रूंसमुच्चरेत् ॥३०५॥ स्तंभमंत्रोयमाख्यातः सर्वकामार्थसिद्धये॥
अनेनमनुनाप्राज्ञस्तंभंसंपूज्यनिर्भयः ॥ ३०६ ॥ ततःपठेन्मंत्रमयंकवचंकार्यसिद्धये ॥यस्यप्रसादमासाद्यसाधकोनिर्भयोभवेत् ॥

॥३०७॥ ऱ्हां ऱ्हीं ऱ्हूं ऱ्हः समुच्चार्य क्ष्रां क्ष्रीं क्ष्रूं क्ष्रः समुच्चरेत् ॥ रव्रां रव्रीं रव्रूं रव्रः समुच्चार्य घ्रां घ्रीं घ्रूं घ्रः स्ततोवदेत् ॥ ३०८॥ स्त्रां स्त्रीं स्त्रूं स्त्रः समुच्चार्य म्रें म्रैं म्रों म्रौं ततोवदेत ॥ ऱ्हों ऱ्हौं ऱ्हों ऱ्हौं समुच्चार्य क्लों क्लौं क्लों क्लौं पुनर्वदेत् ॥ ३०९॥ श्रों श्रौं श्रों साधकप्रोक्का ज्रों ज्रौं ज्रों ज्रौं समुच्चरेत् ॥ हुं हुं हुं हुं समुच्चार्य हुं हुं हुं हुं फट् अथोच्चरेत् ॥ ३१०॥ सर्वतोरक्षरक्षेतिरक्षरक्षेति भैरव ॥ नाथनाथपदं प्रोक्का फडंतोयं महामनुः ३११ ॥ सर्वरक्षाकरप्रोक्तः साधकाभीष्टदायकः ॥ एवंविधायमतिमांस्तनोरक्षांविशालधीः ॥ ३१२॥ वीरशांतिमथोकुर्यात्सर्वकार्यस्यसिद्धये ॥ ययासिद्ध्यतिकार्याणिसाधकानांमहेश्वरी ॥ ३१३ ॥ यावत्कुर्यान्नवीराणांशांतिसाधकसत्तमः ॥ तावन्नजायतेसिद्धिः साधकस्यकथंचन ॥ ३१४॥ श्मशानदेशेयेवीराश्शिरास्यादायशासनं ॥ समस्थितानिकृंतंतिसाधकानांमनोरथान् ॥३१५॥ अपूजिताः पूजितास्तेसर्वकामफलप्रदाः ॥ वीरशांतिमथोवक्ष्येसाधकानांहितायवै ॥ ३१६॥ यस्याः प्रसादमासाद्यसाधकः सुखमेधते ॥ पद्ममष्टदलंकृत्वातद्बाह्येषोडशंतथा ॥ ३१७॥ तद्बाह्येष्टदलंचापिभूपुरंचततोलिखेत् ॥ एवंमंडलमालिख्यसाधकोनिर्भयः स्थितः ॥ ३१८ ॥ मूलमंत्रेणनैवेद्यंभैरवायसमर्पयेत् ॥ आद्यपद्मस्यमध्येतुततश्चैवाष्टभैरवान् ॥ ३१९॥ षोडशाब्देमहापद्मेततः साधकसत्तमः ॥ संपूज्यप्रयतोदद्यात्नैवेद्यंपायसस्यच ॥ ३२०॥ मित्राणिषोडशप्राज्ञ भैरवस्यमहात्मनः ॥ कुलीशंसुकुलीशंचजामित्रंरामठारिभो ॥ ३२१॥ प्रचंडंचंडकेशंचचंडात्मानंचचामरं ॥ चारित्रंचचमत्कारंचंचलंचारुभूषणं ॥ ३२२॥ चामीकरंचारुवहंकितवंचेतिषोडश ॥ नत्यंतनामभिः पूज्याः षोडशानंदपूरिताः ॥ ३२३॥ ततोष्टपत्रेसंपूज्याब्राह्म्याद्यामातृसत्तमाः ॥ स्वस्वदिक्षुमहेंद्रादीन्पूजयेत्साधकोत्तमः ॥ ३२४॥ ततोक्षतासमादायविकिरंश्चक्रमंडले ॥ वीरशांतिंपठेत्सम्यक्साधकः प्रीतमानसः ॥ ३२५॥ चंडप्रचंडोर्द्धकेशभीषणाभीषणाभिधाः ॥ व्योमकेशोव्योमबाहोव्योमव्यापकएवच ॥ ३२६॥ एतान्वीरान्समाहूयह्यायाहीतिसमुच्चरन् ॥ मंडलेसाधकश्रेष्ठोनैवेद्यादिभिरर्चयेत् ॥ ३२७॥ एवमर्चासमाधायसाधकोनिर्भयः स्थितः ॥ पूर्वप्रोक्तान्सुधीः कृत्वान्यासान् अत्यंतसिद्धिदान् ॥ ३२८ ॥ पश्चिमाभिमुखोभूत्वामालामादायपाणिना ॥ उच्चैस्तराजपंकुर्यादागतायमहात्मने ॥ ३२९॥ भैरवायसमीपेनुवामहस्तेनपायसं ॥ भोजयेच्चज-

पंकुर्यान्निर्भयः प्रीतमानसः ॥ ३३० ॥ तृप्तोदेवोयदाब्रूयाद्वरंवरयवांछितं ॥ प्रणम्यदंडवद्भूमौवांछितंवरमुच्चरेत् ॥ ३३१ ॥ गृहेचागत्य प्रय-
त उत्सवंचसमाचरेत् ॥ अनेनमनुनादेवीसिद्धेनजगतीतले ॥ ३३२ ॥ असाध्यंनास्तिलोकेषुसत्यंसत्यंमयोदितं ॥ वचाचूर्णपलस्यार्धंतन्मा
नंघृतसंयुतं ॥ ३३३ ॥ पद्मपत्रेविनिक्षिप्यत्रिशतंप्रजपेद्बुधः ॥ प्राशयेन्नियतोभूत्वा पुनर्लक्षत्रयंजपेत् ॥ ३३४ ॥ तंस्यैवंकुर्वतः प्रज्ञानिःसी
माभवतिध्रुवं ॥ गद्यपद्यमयीवाणीश्रुतस्याप्यवधारणं ॥ ३३५ ॥ अत्रवचाचूर्णभक्षणंतुयावद्भिर्दिनैस्त्रिलक्षजपोभवतितावद्भागा-
न्कृत्वाप्रत्यहमेकं भागंप्राशयेदितिसांप्रदायिकाः विवाद प्रयोगविशेषः रुद्रयामले शुक्लपक्षेद्वितीयायांशुक्रवारेसमान्वितः ॥ पूर्व-
वत्पूजयेद्देवंसिद्धान्नंचनिवेदयेत् ॥ ३३६ ॥ पलार्द्धंचवचाचूर्णंतन्मानघृतसंयुतं ॥ पद्मपत्रेविनिक्षिप्यत्रिसहस्रंजपेद्बुधः ॥ ३३७ ॥
त्रिसहस्रजपोविशेषः अन्यत्सर्वंसमानं विवादक्षेत्रमध्येतुदेवंध्यात्वाचतत्क्षणात् ॥ अभिमंत्र्यमृदंप्राश्यसंध्योपास्यस्वयंप्रभुं ॥ ३३८
॥ ससमाह्वांस्त्रिकालेतुतत्पक्षोचैवसिध्यति ॥ मृत्युंजयमहंवक्ष्येयथावच्छृणुसुंदरी ॥ ३३९ ॥ उत्तरायणकालेतुदक्षिणायनमेवच ॥
कालज्ञानमिदंज्ञात्वातत्वज्ञानंजपेत्युमान् ॥ ३४० ॥ कृष्णाष्टम्यांचतुर्थ्यांवाप्यंमारकदिनेततः ॥ सात्विकंबालरूपंचद्विभुजंचिंतये-
द्बुधः ॥ ३४१ ॥ अर्चयित्वायथान्यायंसिद्धान्नंचनिवेदयेत् ॥ यद्रूपंकथितंपूर्वमादिमध्यांतवर्जितं ॥ ३४२ ॥ तुषारकणिकाभासंध्यात्वा
देवंसमाहितः ॥ सूकरीमुद्रयायुक्तंखेचरीबहुमेलकं ॥ ३४३ ॥ ध्यानयोगेनमंत्रंचमनसापिजपेद्बुधः ॥ इत्येवंतुजपेल्लक्षंतदामृत्युंज-
योभवेत् ॥ ३४४ ॥ मृत्युनंगालिकांक्षीवेत्सालिकंश्वेनरूपकं ॥ हृदयेस्वासनंध्यात्वातन्मध्येदेवमास्थितं ॥ ३४५ ॥ नतस्यकालनीकांति
मूर्तिमंडलमाप्नुयात् ॥ कृष्णपक्षेचतुर्दश्यांभूमिपुत्रस्यवासरे ॥ ३४६ ॥ आराध्यविधिवद्देवंतस्याग्रेस्थापयेद्बुधः ॥ रोचनाहेमजेपात्रे
संपूज्यविधिनायतां ॥ ३४७ ॥ गंधपुष्पादिनास्पृष्ट्वातांजपेदयुतत्रयं ॥ तद्भृतवर्त्तिप्रज्वाल्यकपिलाघृतसेवितं ॥ ३४८ ॥ सौवर्णेनृक-
पालेवापात्रेसंगृह्यचांजनं ॥ संपूज्यचपुनर्जप्त्वातत्पात्रंमंत्रसंग्रहं ॥ ३४९ ॥ ध्यात्वावादवदंशोरेतदाचांज्जनमाचरेत् ॥ वश्याभवंति
तेसर्वेयान्यान्पश्यतिसाधकः ॥ ३५० ॥ वंध्याचिकित्सांकुर्वाणोबालार्काभंसमर्चयेत् ॥ हरिद्रार्धपलंचैववचाचूर्णंचतत्समं ॥ ३५१ ॥

पेषयित्वानुगोमूत्रेगोलकं घृतसंयुतं ॥ पद्मपत्रेविनिक्षिप्यस्थापयेद्देवसंन्निधौ ॥ ३५२॥ प्रणिपत्यनमस्कृत्यजपेदुच्चैः सहस्रकं ॥ एवमेव
प्रकारेणप्राशयेत्तुमहौषधं ॥ ३५३॥ श्रीमंतमायुष्मंतंचबलवंतंसुदर्शनं ॥ विद्यावंतंपुत्रवंतंसद्यःपुत्रमवाप्नुयात् ॥ ३५४॥ अन्यत्र
वर्णलक्षंजपेन्मंत्रंततोसिद्धिर्भविष्यति ॥ हविष्यभक्षणंकुर्याद्भूमिशाईजितेंद्रियः ॥ ३५५॥ दशांशंहवनंकुर्यात्तिलाज्यमधुभिर्द्विजः ॥
कोटिजपकृतेमर्त्योश्रीयमाप्नोत्यनुत्तमां ॥ ३५६॥ वश्यार्थमयुतंजप्त्वारक्तपुष्पैर्दशांशतः ॥ होमंकुर्यात्करवीरैर्स्वेतैर्विद्यामवाप्नुयात् ॥
३५७॥ लक्ष्म्यास्त्यैकमलैर्होमोदीर्घायुर्दुर्वयाहुते ॥ गुडेनरोगनाशःस्यात् अपमृत्युनिवारणं ॥ ३५८॥ वस्त्रेणवस्त्रप्राप्तिःस्याद्धान्याप्तिर्धा-
न्यहोमतः ॥ पुत्रजीविफलैर्होमेसर्वसिद्धिमवाप्नुयात् ॥ ३५९॥ अश्वत्थसमिधाहोमेपुत्राप्तिःसर्वसिद्धयः ॥ लवणघृतहोमेनशत्रून्मादक
रंभवेत ॥ ३६०॥ काकोलूकमांसहोमाच्छत्रूनमारयतेध्रुवं ॥ समरात्रेणदेवेशीस्मशानेचत्रिलक्षकं ॥ ३६१॥ जपित्वाबलिदानेनबटुकोद-
र्शनेभवेत् ॥ वटवृक्षतलेमर्त्योत्रिलक्षंप्रजपेन्निशि ॥ ३६२॥ रसायनंचगुटिकाचेटकासिद्धिमाप्नुयात् ॥ बिभीतकवृक्षतलेयदिलक्षंज-
पेन्नरः ॥ ३६३॥ वेतालभूतप्रेताश्चवश्यंभवंतिनिश्चयात् ॥ जुहुयाद्दारुणैभोजैरजोदोषैर्मधुराप्लुतैः ॥ ३६४॥ लक्षसंख्यातदर्धंवाप्र-
त्यहंभोजयेद्द्विजान् ॥ वनितांयुवतींरम्यांप्रीणयेद्देवताधिया ॥ ३६५॥ होमांतेधनधान्याद्यैस्तोषयेद्गुरुमात्मनः ॥ एवंकृतेजगद्वश्योरमा-
याभवनंभवेत् ॥ ३६६॥ रक्तोत्पलैस्त्रिमध्वक्तैररुणैर्वाहरिद्रजैः ॥ पुष्पैःपयोन्नैःसघृतैर्होमाद्विश्वंवशंनयेत् ॥ ३६७॥ वाक्सिद्धिंलभतेमं-
त्रीपालाशकुसुमैर्हुते ॥ कर्पूरागरुसंयुक्तंगुग्गुलंजुहुयात्सुधीः ३६८॥ ज्ञानंदिव्यमवाप्नोतितेनैवसभवेत्कविः ॥ क्षीराक्तैरमृतारवंडैः हो-
मोसर्वापमृत्युजित् ॥ ३६९॥ दुर्वाभिरायुषेहोमःक्षीराक्ताभिर्दिनत्रयं ॥ गिरिकर्णिभवैःपुष्पैर्नवधुकर्णिकारजैः ॥ ३७०॥ मालतीकुसुमैर्हु-
त्वातत्पुत्रांश्चवशंनयेत् ॥ कारंडकुसुमैर्वैश्यान् वृषलान्पाटलोद्भवैः ॥ ३७१॥ आत्मनामविलेपांतस्थितसाध्याह्वयान्वितं ॥ मंत्रमुच्चार्यजु-
हुयान्मंत्रीमधुरलोडितैः ॥ ३७२॥ सर्षपैःपटुसंमिश्रैर्वशयेत्पार्थिवान्क्षणात् ॥ अनेनैवविधानेनसपत्नींतत्सुतानपि ॥ ३७३॥ जातिबिल्व
फलैःपुष्पैर्मधुरत्रयसंयुतैः ॥ नरनारीनरपतीन्होमतोवशयेद्ध्रुवं ॥ ३७४॥ मालतीकुसुमोद्भूतैःपुष्पैश्चंदनलोडितैः ॥ जुहुयात्कवितांमंत्री

लभतेवत्सरानने ॥३७५॥ मधुरत्रयसंयुक्तैः फलैर्बिल्वसमुद्भवैः ॥ जुहुयाद्दशयेल्लोकान्श्रियंप्राप्नोतिवांछितां ॥ ३७६ ॥ पाटलैः कुसुमैः
कुंदैरुत्पलैर्नागचंपकैः ॥ नंद्यावर्त्तैर्विकचितैः कृतमालैर्जुहोतियः ॥ ३७७ ॥ जायतेवत्सरादर्वाक् श्रियाविजितपार्थिवः ॥ साज्यमन्नंप्रजुहुया
द्भवेदन्नसमृद्धिमान् ॥ ३७८ ॥ कस्तुरीकुंकुमोपेतंकर्पूरंजुहुयाद्दशी ॥ कंदर्पादधिकंसद्यः सौंदर्यमधिगच्छति ॥ ३७९ ॥ लाजान्प्रजुहुयान्मं-
त्रीदधिक्षीरघृतप्लुतान् ॥ विजित्यरोगानखिलान्जीवेच्चशरदांशतं ॥ ३८० ॥ पादद्वयंचमलजंपादंकुसुमकेसरं ॥ पादंगोरोचनायाश्चत्रीणि
पिष्ट्वाहिमांभसा ॥ ३८१ ॥ विदध्यात्तिलकंभालेयान्पश्चाद्वैर्विलोकयेत् ॥ यान्स्पृशेत्स्पृशतोयोवैवश्याःस्युस्तस्यतेचिरात् ॥ ३८२ ॥ क-
र्पूरकपिचोराणिसमभागानिकल्पयेत् ॥ चतुर्भागोजटामांसितावतीरोचनामता ॥ ३८३ ॥ कुंकुमंसप्तभागंस्यात्द्विभागंचंदनंमतं ॥ अगरंन-
वभागंस्यात् एवंभागक्रमेणच ॥ ३८४ ॥ हिमाद्रिः कन्यकापिष्टमेतत्सर्वंसुसादितं ॥ योभालेतिलकंधत्तेकुर्याद्भूमिपतीन्नरान् ॥ ३८५ ॥
वासितामदगर्वाढ्यान्मदोन्मत्तान्मतंगजान् ॥ सिंहान्व्याघ्रान्महासर्पान्भूतवेतालराक्षसान् ॥ ३८६ ॥ दर्शनादेववशयेत्तिलकंधार-
येन्नरः ॥ अथस्तवराजपुरश्चरणप्रयोगानाह शिवागमसारे हविष्यान्नंचमाषान्नंयवान्नंतंदुलानिवा ॥ ३८७ ॥ सकृज्जग्ध्वावाग्यतश्चभूमि
शायीजितेंद्रियः ॥ एकादशसहस्त्रंवैपुरश्चरणमाचरेत् ॥ ३८८ ॥ स्तोत्रादौमूलमंत्रंचत्वष्टोत्तरशतंजपेत् ॥ स्तोत्रांतेचशतावृत्तिंकृत्वास्तो-
त्रंपठेत्पुनः ॥ ३८९ ॥ एवंसंपुटितंकृत्वादेवंनत्वापठेत्स्तवं ॥ दशांशंहवनंकुर्यात्तद्दशांशेनतर्पणं ॥ ३९० ॥ मार्जनंतद्दशांशेनदशांशंविप्रभो-
जनं ॥ एवंकृतेमनुष्योवैप्राप्नुयान्मनसेप्सितं ॥ ३९१ ॥ मतांतरंप्रवक्ष्यामियंकृत्वानावसीदति ॥ प्रथमंन्यासपूर्वंहिस्तोत्रपाठंविधायच ॥
३९२ ॥ शतंवामंत्रजाप्यंहिनित्यंकृत्वासुमंत्रकः ॥ जप्त्वाचविधिपूर्वंहियथाशक्त्यापुनःसुधीः ॥ स्तोत्रपाठंपुनःकृत्वापूर्वोक्तान्नियमान्चरे-
त् ॥ स्तोत्राभ्यांसंपुटंकृत्वाहोमादिपूर्ववत्सुधीः ॥ ३९४ ॥ मयामतद्वयंप्रोक्तंसर्वेषांसुखहेतवे ॥ प्रयोगांश्चप्रवक्ष्यामिलोकानांहित-
काम्यया ॥ ३९५ ॥ आपदुद्धारकंयेवैपठंतिप्रत्यहंप्रिये ॥ तेषांनदुर्लभंकिंचिदसाध्यंयत्सुरैरपि ॥ ३९६ ॥ दशावर्त्तंचमंत्रस्यपुराकृ-
त्वापठेत्स्तवं ॥ यंत्रादिपूर्ववत्कृत्वात्रिकालंयःपठेदिह ॥ ३९७ ॥ रात्रौवारत्रयंयोवैतस्यवश्यंजगद्भवेत् ॥ प्रातश्चैकादशावृत्तिरा-

ऽरौवापुनरेवहि ॥ ३९८॥ पूर्ववच्च विधिंकृत्वापठनीयःस्तवःशुभः ॥ महानिशित्रिरावृत्तिंयःकरोतिसदाशुचिः ॥ ३९९॥ राजानोवशमायांतिसभाशोभाकरोभवेत् ॥ शनौचप्रातरुत्थायदशावर्त्तिंचरेदिह ॥ ४००॥ होमादिकंचसंपाद्यषण्मासादतुलांश्रियं ॥ शनौचैवाश्वत्थमूलेपूजयित्वाशिवंप्रिये ॥ ४०१॥ शतावृत्तिंपठित्वातुजगद्वल्लभतामियात् ॥ रवौचनाभिमात्रेहिजलेस्थित्वापठेदिह ॥ ४०२॥ एकादशतथावृत्तिंपठित्वाप्राप्नुयाच्छ्रियं ॥ पठेच्चरोगशांत्यर्थंनक्षत्रेपुष्यसंज्ञके ॥ ४०३॥ अष्टावृत्तिंपठेद्योवैआरोग्यंलभतेध्रुवम् ॥ रवौचब्राह्मणान्पूज्यपाठयेच्छतवारकं ॥ ४०४॥ वारेवारेचषण्मासंपठित्वासुतमाप्नुयात् ॥ सप्तजन्मभवावंध्याजीवपुत्राभवेदिह ॥ ४०५॥ कन्याकामोभवेद्योवैत्रिकालंरविवासरे ॥ षण्मासादप्सरातुल्यांलभतेस्त्रियमुत्तमां ॥ ४०६॥ वैद्यानांचअसाध्योवैरोगोभवतियस्यच ॥ तस्यरोगस्यशांत्यर्थंपठेत्स्तोत्रमनुत्तमं ॥ ४०७॥ निष्फलश्चक्रतुर्यस्यभवतीहसदाप्रिये ॥ सहस्त्रावर्तनंकृत्वासफलश्चक्रतुर्भवेत् ॥ ४०८॥ ग्रहणेचपठेद्योवैविधिनाचंद्रसूर्ययोः ॥ मनोदिष्टांतदासिद्धिंप्राप्नुयान्नात्रसंशयः ॥ ४०९॥ तीर्थेचैवशुभक्षेत्रेशिवस्यसन्निधौप्रिये ॥ पठित्वापुत्रमंत्रंचसद्यःसिद्धिंलभेदिह ॥ त्रिरावृत्तिंदशावृत्तिंविंशतिंवाशतावधिं ॥ सहस्त्रसंख्ययावाथचैकादशसहस्त्रकं ॥ ४११॥ पुरश्चरणकंप्रोक्तंभैरवस्यमहात्मनः ॥ पुरश्चरणकंकृत्वापठतेनित्यमेवच ॥ ४१२॥ सद्यःसिद्धिंयथोक्तांहिप्राप्नुयान्नात्रसंशयः ॥ मानुषंजन्ममासाद्यदुःखभाजोभवंतिये ॥ ४१३॥ तेभजंतुसदादेवंभैरवंसुखदायकं ॥ नहिदुःखंनैवविद्येतभैरवोनाशयेदिह ॥ ४१४॥ तस्माद्दुःखविनाशायभैरवोसेव्यतांजनैः ॥ मयादुःखविनाशायभैरवंरूपमाश्रितं ॥ ४१५॥ भैरवःसेवितोयेनतेनैवसेवितोह्यहं ॥ अहंभैरवरूपेणलोकानांसुखदःसदा ॥ ४१६॥ मयावैभैरवस्यैवविधिराराधनस्यच ॥ विविधाराधनकामान्प्राप्नुवंतितथाप्रिये ॥ ४१७॥ तत्तत्तयामयादेवीप्रोक्तंत्वांचप्रियासिमे ॥ स्थापनीयंत्वयालोकेसर्वेषांसुखहेतवे ॥ ४१८॥ तिलानांचतथाहोमोगुग्गुलस्यतथापुनः ॥ मधुकानांचपुष्पैश्चब्रह्मवक्षभवैस्तथा ॥ ४१९॥ बिल्वीदलैस्तथादेवीगडूचीखंडकैस्तथा ॥ करवीरस्यकुसुमैर्बंधुजीवैस्तथापुनः ॥ ४२०॥ औदुंबरसमिद्भिश्चपलाशस्यतथाप्रिये ॥ अनेकैश्चफलैर्देवीकदलीबीजपूरकैः ॥ ४२१॥

माधूर्यैर्विविधैस्तस्यप्रीत्याहोमंप्रकल्पयेत् ॥ घृतेनसितयाप्रीतिर्जायतेभैरवस्यच ॥४२२॥ कुंडानिविविधानिह्प्रोक्तानिकामभेदतः ॥
ब्रह्मभोज्यंप्रकर्त्तव्यंतस्यप्रीत्याप्रियेसदा ॥४२३॥ त्रिकोणंचैवषट्कोणंचतुष्कोणमथापिवा ॥ हस्तमात्रंद्विहस्तंवाद्वात्रिंशदंगुलंतथा
॥४२४॥ दशांगुलंचनित्यंचेदेकादशांगुलावधि ॥ महाहोमेमहत्प्रोक्तंलघुहोमेलघुस्मृतं ॥४२५॥ एतत्तेसर्वमाख्यातंतवप्रीत्यैम-
याशुभे ॥ सात्विकायनवक्तव्यंवेदभ्रष्टायवातथा ॥४२६॥ संध्याहीनायनोवाच्यमभक्ष्याभक्षकायच ॥ पापिष्टायतथादेवीविश्वा
सरहितायच ॥४२७॥ नवक्तव्यंत्वयादेवीसत्यंसत्यंवदामिते ॥ इतिश्रुत्वातथादेवीसंहृष्टाचपुनःपुनः ॥ ४२८॥ नमस्कृत्वातदाशंभू-
रव्यापयामासवैभुवि ॥ अथन्यासेविशेषः भैरवकल्पे ॥ ईशानंमूर्द्धिविन्यस्यमुखेतत्पुरुषंन्यसेत् ॥४२९॥ अघोरंहृदये
न्यस्यवामदेवंचगुह्यके ॥ सद्योजातंपदोन्यस्यपंचब्रह्माधिविन्यसेत् ॥ ४३०॥ आवाहयेत्तदादेवंसद्योमंत्रेणमूलतः ॥ मूलमंत्रेण
संयूक्तंचासनंवामदेवतः ॥४३१॥ सांन्निध्यंमूलमंत्रेणचाघोरेणचपाद्यकं ॥ तत्पुरुषेणयोगार्त्तीईशानेदेवमुद्रयोः ॥ ४३२ ॥एवंतु
मंत्रयोगेनमुद्राषट्कंप्रदर्शयेत् ॥ नष्टद्रव्यस्यप्राप्त्यर्थेकुमारंबटुकंजपेत् ॥ ४३३॥ पूर्ववत्पूजयित्वातुसिद्धान्नंचनिवेदयेत् ॥ स-
हस्त्रंतुजपंकृत्वाविशेषाद्देवसंन्निधौ ॥४३४॥ आराध्यप्राणिपातेननष्टद्रव्यंचलभ्यते ॥ रामचंद्राश्रमकृतप्रयोगेशत्रुसेनाविनाशायरा-
जादद्याद्बलिंप्रिये ॥४३५॥ पूर्वोक्तंराजसंदेविबलिंनिष्पाद्यमंत्रवित् ॥संपूज्यपूर्ववत्देवंमध्यरात्रेमहेश्वरी ॥ ४३६॥ अन्यूनांगमजं
देविसर्वलक्षणसंयुतं ॥ आनीयमूलमंत्रेणस्नापयित्वाशुभैर्जलैः ॥४३७॥ गंधमाल्यैरलंकृत्यदेवस्याग्रेनिधाप्यनं ॥ मूलमंत्रेणसंप्रो-
क्ष्यसंरक्ष्यास्त्रेणतंप्रिये ॥ ४३८ ॥कवचेनावगुंठ्याथमुद्रयाधेनुसंज्ञया ॥ अमृतीकृत्यसर्वांतेदेवतारूपिणेबलिं ॥४३९॥रूपये-
त्पशवेत्युक्त्वानमइत्यर्चयेत्त्रिधा ॥गंधादिकैस्ततोदेविकर्णेतस्यप्रविक्षिपेत् ॥ ४४०॥ पशुपाशायइत्युक्त्वाविद्महेतदनंतरं ॥ हिप्रकी-
र्णायदेवेशिधीमहीतिततःपरं ॥४४१॥ तन्नोजीवःसमुच्चार्यवदेद्देविप्रचोदयात् ॥ इत्येतांपशुगायत्रींतर्पयित्वामहेश्वरि ॥४४२ ॥ निधा-
यपुरतःखड्गंॐ ह्रींकालीविधीयते ॥ धीवज्रेश्वरिबलोहातेदंडायैनमइत्यथ ॥ ४४३॥ त्रिधाचपूजयेद्देविमुष्टौतस्यततोर्चयेत् ॥

॥ वागीश्वरींचब्रह्माणींलक्ष्मीनारायणौततः ॥४४४॥ मध्येग्रहेशदेवेशिउमामाहेश्वरौयजेत् ॥ इत्यर्चितंसमादायखड्गंहस्तेमहेश्वरि ॥४४५॥ आदायमंत्रयेन्मंत्रीमंत्रेणानेनसुव्रते ॥ रेवज्रायासुरनाशायदेवकार्यार्थितत्पर ॥४४६॥ पशुच्छेद्यस्त्वयंशीघ्रखड्गनाथनमोस्तुते॥ ततउच्चार्यविधिवत्तिथ्युल्ले खावसानकं ॥४४७॥ गोत्रनामचसंकीर्त्यकामनांसमुदीर्यच ॥ श्रीभैरवइमंछागबलिंतुभ्यमहंवदेत् ॥४४८॥ प्रददेतत्समुच्चार्यकुशपुष्पाक्षतान्वितं ॥ जलंपशोस्तुनिक्षिप्यशिरसिश्रीशिवेततः ॥४४९॥ यज्ञार्थेपशवःसृष्टाःयज्ञार्थेपशुघातनं ॥ अत स्त्वांघातयिष्यामितस्माद्यज्ञेवधोवधः ॥४५०॥ इमंसंबोधयेत्तस्यशिरःस्पृष्ट्वायुनःपशुं ॥ अस्त्रमंत्रंसमुच्चार्यच्छिंदियुग्मंततोवदेत् ॥४५१ ॥ स्वाहेत्युच्चार्यतंखड्गंतस्यस्कंधेनियोजयेत् ॥ स्वात्मानंभैरवंध्यायन्नामकेनमहेश्वरी ॥४५२॥ प्रहारेणसमुच्छेद्यबलिमंत्रमिमंपठेत् ॥ शत्रुपक्षस्यरुधिरंपिशितंचदिनेदिने ॥४५३॥ भक्षयस्वगणैःसार्धसारमेयसमन्वितः ॥ शत्रुनामाक्षरैर्मंत्रैविदर्च्यमनुवित्तमः ॥ ४५४॥ सैन्यंशत्रोर्बलिस्त्वेनकल्पयित्वामहेश्वरी ॥ पशुनासहतत्सैन्यंसम्यक्तस्मैनिवेदयेत् ॥४५५॥ अनेनबलिदानेनसंतुष्टोभैरवः स्वयं ॥ शत्रुसैन्यंविभज्याथस्वगणेभ्यःप्रयच्छति ॥ ४५६ ॥ क्रुद्धःसभाजयेच्छीघ्रंनात्रकार्याविचारणा ॥ अथगजाश्वादिप्रयोगः तत्रसारसंग्रहे गजानांचतुरंगाणांविशेषाच्छांतयेततः ॥ ४५७॥ तच्छालासुपुराप्रोक्तकुंडंकृत्वायथाविधिः ॥ जुहुयात्पायसाद्यैश्चतिले न्ययुतमुक्तवान् ॥ ४५८॥ तदाविप्रान्भक्ष्यभोज्यैस्तोषयेच्चसदक्षिणैः ॥ पूर्वोक्तेनप्रकारेणकलशान्स्थापयेत्ततः ॥ ४५९॥ तत्रगंधा दिभिःसम्यक्बटुकेशंसमर्चयेत् ॥ अभिषिंचेज्जलैस्तैस्तान् गजानश्वांश्चमंत्रवित् ॥४६०॥ वर्द्धंतेप्रत्यहंचैनेगजाश्वापितुरंगमाः ॥ तेषांचसमरेशक्तिर्महतीजायतेततः ॥४६१॥ गजाश्वानामजेयाश्चभवेरन्द्विषतांयदा ॥ अस्मादन्यामहारक्षानास्तिभूमंडलेखि- ले ॥ ४६२ ॥

## ॥ अथसर्वकामप्रदंभैरवयंत्रमाह ॥

अथयंत्रंप्रवक्ष्यामिबटुकस्यसुरार्चिते ॥ आलिखन्याष्टदलंपद्मंकर्णिका- यांसमालिखेत् ॥ ४६३॥ ॐ श्रीं ह्रीं क्लीं क्षौ मितितत्पत्रेषुपरमेश्वरी ॥ बटुकायेत्यक्षराणिद्विरावृत्यालिखेत्प्रिये ॥ ४६४॥ बहिः षोडशपत्राढ्यंपद्मंकृत्वासुशोभनं ॥ तत्पत्रेषुलिखेद्देविशिष्टान्वर्णांस्तुषोडश ॥४६५॥ मंत्रश्चतद्बहिश्चापिपद्मंषोडशपत्रकं॥

अथसर्वकामप्रदं बटुकयंत्रम्

तन्त्रतेषुलिखेद्देविस्वरान्षोडशसुव्रते ॥ ४६६ ॥ द्वात्रिंशत्पत्रसं-
युक्तं पद्मंकृत्वाथतद्बहिः ॥ कादिक्षांतान्लिखेत्तस्य पत्रेषु परमेश्व-
री ॥ ४६७ ॥ वेष्टयेच्चतुरस्रेण यंत्रमेतद्दशानने ॥ जयदं सुखदं
वश्यं मृत्युदारिद्रनाशनं ॥ ४६८ ॥ श्रीप्रदं दुरितव्याधिदुष्टग्रह
निकृंतनं ॥ भूतापस्मारकृत्यादिनृणांरक्षाकरंपरं ॥ ४६९ ॥
अस्मात्परतरारक्षानास्तिनास्तिनसंशयः ॥ अथत्रोतलतंत्रोक्त
भैरवयंत्रोद्धारः व्योमाब्जंवसुपत्रकेसरधरंशक्त्यावरंषट्दलं
॥ पद्मंचाष्टदलंततः सुविमलं भागेद्रदिक्षोबिलं ॥ वेदद्वार
विशालसुंदरतरं पुष्यादिगंधोत्कटं ॥ श्रीमद्भैरवसर्वमोह-
नकरं यंत्रंत्वदीयंभजे ॥ अथबलिविधानं ॥ शवंसिद्धम-
नुर्मंत्रीनित्यनैमित्तिकेरतः ॥ विघ्नंदुर्गांसमभ्यर्च्यबलिंदत्वा
विधानतः ॥ ४७१ ॥ काम्यानिसाधयेन्मंत्रीयथोक्तांसिद्धि
माप्नुयात् ॥ अन्नंशालिसमद्भूतंमांसंपक्वंसशर्करं ॥ ४७२
॥ लाजाचूर्णगुडापूपमाक्षिकेक्षुरसान्वितं ॥ घृतप्लुतंसर्व-
मेतदेकीकृत्यमहेश्वरी ॥ ४७३ ॥ कृत्वाग्रासंसमाराध्यब-
टुकेशंमहेश्वरी ॥ प्रागुक्तेनविधानेनरक्तचंदनसंयुतैः ॥

४७४ ॥ रक्तपुष्पाक्षतैर्देवी धूपैर्दीपैर्मनोहरैः तस्याग्रे मंडलं कृत्वा चतुरस्रं सुरेश्वरी ॥ ४७५ ॥ त्रिकोणगर्भितं तत्र पात्रे हेममये शुभे ॥ राजते वा
थ कांस्ये वा निधाय कवलं शुभं ॥ ४७६ ॥ अर्चयित्वाथ तत्पिंडं गंधाद्यैर्मूलमंत्रितैः ॥ बलिद्रव्याय इत्युक्त्वा नम इत्यर्चयेत्ततः ॥ ४७७ ॥ ततो जलं
समादाय चुलुकेन महेश्वरी ॥ मूलमंत्रं समुच्चार्य संबोध्य बटुकं प्रिये ॥ ४७८ ॥ इमं बलिं गृह्ण युग्मं स्वाहांतं समुदीर्य च ॥ जलं समर्पयेत्तत्र चिंत-
येद्बटुकं प्रिये ॥ ४७९ ॥ स्वहस्ते बलिमादाय भुंजानं वरदं प्रभुं ॥ राजसोयं बलिर्देवि कथितः सर्वसिद्धिदः ॥ ४८० ॥ राजसः सात्विकश्चेति -
सात्विकं शृणु वल्लभे ॥ पूर्वोक्तैः सकलैर्द्रव्यैर्मांसहीनैः सुरेश्वरी ॥ ४८१ ॥ मुद्गसूपसमायुक्तैः पायसेन समन्वितैः ॥ मधुरत्रयसंयुक्तैः प्राग्वद्दद्या
द्विचक्षणः ॥ ४८२ ॥ आदावंते प्रयोगस्य बटुकाय बलिं हरेत् ॥ राजसो मांसरक्ताढ्य पलत्रयसमन्वितः ॥ ४८३ ॥ विश्वसारे मेषकुक्कुटयोर्मांस
शाल्यन्नं घृतसंप्लुतं ॥ लाजाचूर्णमपूपं च गुडमिक्षुसमन्वितं ॥ ४८४ ॥ मरीचैर्जीरकैश्चैव गुडखंडैस्तथैव च ॥ शालितंदुलभक्तं च गोक्षीरेण-
समन्वितं ॥ ४८५ ॥ अन्यत्र ॥ पलत्रयं माषचूर्णं दधिक्षीरं घृतं तथा ॥ गुडोदनेन संयुक्तं मिश्रिकृत्य विचक्षणः ॥ ४८६ ॥ अथ तंत्रसारोक्त
बटुकमंत्राः निबंधे उद्धरे द्बटु कंठे तमापदुद्धारणं तथा ॥ कुरुद्वयं पुन ॐ तं बटुकं च तदुद्धरेत् ॥ ४८७ ॥ ह्रीं बटुकाय आपदुद्धारकाय कुरु कु-
रु बटुकाय ह्रीं ॥ एकविंशत्यक्षरात्मा शक्तिरुद्धो महामनुः ॥ ४८८ ॥ अस्य पूजा प्रयोगः ॥ प्रातःकृत्यादि प्राणायामांतं विधाय पीठन्यासं
कुर्यात् यथा धर्माद्यनैश्वर्य्यांतं विन्यस्य ऋष्यादिन्यासं कुर्यात् यथा शिरसि बृहदारण्यकऋषये नमः मुखे गायत्रीछंदसे नमः हृदि बटुकभै-
रव देवतायै नमः ॥ ततो मूर्त्तिन्यासः ह्रीं ब्रों रों ईशानाय नमोंगुष्ठयोः ह्रीं ब्रें रें तत्पुरुषाय नमस्तर्जन्योः ह्रीं ब्रुं रुं अघोराय नमो मध्य-
मयोः ह्रीं ब्रिं रिं वामदेवाय नमोनामिकयोः ह्रीं ब्रं रं सद्योजाताय नमो कनिष्ठयोः पुनस्तदंगुलिभिः शिरोवदनहृद्गुह्यपादेषु तत्तद्बीजादिका
स्तत्तन्मूर्तीर्न्यसेत् तथा ऊर्द्ध्वप्राग्दक्षिणोदीच्यपश्चिमेषु मखेषु च तान्न्यसेत् तथा च निबंधे अंगुलीदेहवक्त्रेषु मूर्तीर्न्यसेद्यथा पुरा सद्या-
दिपंचह्रस्वाढ्यं शक्तिबीजपुरःसरं ॥ ४८९ ॥ बकारं पंचह्रस्वाढ्यमीशादिषु योजयेत् ॥ ततः करांगन्यासो यथा ह्रां बां अंगुष्ठाभ्यां
नमः ह्रां बां हृदयाय नम इत्यादि च षड्दीर्घयुक्तम् तथा च निबंधे षड्दीर्घभाजया शक्त्या बकारेण च तद्वता ॥ अंगानि जातियुक्तानि

प्रणवाद्यानिकल्पयेत् ॥ ४९० ॥ ततोध्यानंत्रिधाप्रोक्त बीजद्वयेनकुर्यात्सात्विकादिप्रभेदतः ॥ सत्वं यथावंदेबालस्फटिक सदृशंकुंतलोद्भासि
वक्त्रं दिव्याकल्पैर्नवमणिमयैः किंकिणीनूपुराद्यैः दीप्ताकारंविशदवसनंसुप्रसन्नंत्रिनेत्रं हस्ताब्जाभ्यांबटुकमनिशंशूलदंडौदधानं ॥ ४९१ ॥
राजसंयथा उद्यद्भास्करसन्निभंत्रिनयंरक्तांगसगस्रजं स्मेरास्यंवरदंकपालमभयंशूलंदधानंकरैः नीलग्रीवमुदारकौस्तुभधरंशीतांशुचूडो-
ज्वलं बंधूकारुणवाससंभयहरंदेवंसदाभावयेत् ॥ ४९२ ॥ तामसं यथा ध्यायेन्नीलाद्रिकांतंशशि कलधरंमुंडमालंमहेशं ॥ दिग्व-
स्त्रंपिंगकेशंडमरुमथसृणिंखड्गशूलाभयानि ॥ नागंघंटाकपालंकरसरसिरुहैर्बिभ्रतंभीमदंष्ट्रं ॥ सर्पाकल्पंत्रिनेत्रंमणिमयविलसत्किं-
किणीनूपुराढ्यं ॥ ४९३ ॥ सात्विकंध्यानमाख्यातमपमृत्युविनाशनं आयुरारोग्यजननमपवर्गफलप्रदं ॥ ४९४ ॥ राजसंध्यानमाख्या-
तंसर्वकामार्थसिद्धिदं ॥ तामसशत्रुशमनंकृत्याभूतगदापहं ॥ ४९५ ॥ एवंध्यात्वामानसैः संपूज्यशंखच्छापनंकृत्वा अस्यपूजायंत्रं
धर्माधर्मादिभिः कूर्मपीठेपंकजशोभिते ॥ ४९६ ॥ षट्कोणांतास्त्रिकोणस्थेव्योमपंकजशोभिते ॥ ४९७ ॥ ततोमूलेनमूर्त्तिंसंकल्प्य पूर्व-
वद्ध्यात्वावाहनादिकंकुर्यात् तत्रक्रमः मूलादिसद्योजातमंत्रेणावाहनम् मूलादिवाम देवेनस्थापनं मूलेनसन्निरोधनं तत्पुरुषेणयो-
निमुद्राप्रदर्शनं ईशानेनचंदनमितिविशेषः ततः कर्णिकायांचतुर्दिक्षुकोणेष्वीशानादीन्पूजयेत् ततोव्योमपंकजदलेषु असितांगादीन्भैर
वान्पूजयेत् ततः षट्कोणेषुपूर्वादिह्रांबांहृदयायनमः इत्यादिनाषडंगानिपूजयेत् ततः पूर्वादिडाकिनीशाकिनीलाकिनीकाकिनीहाकिनी
मालिनी देवीपुत्रानष्टदिक्षुयजेत् उमापुत्रान्रुद्रपुत्रान्मातृपुत्रान्दक्षिणतोयजेत् ऊर्ध्वेऊर्ध्वमुखीपुत्रान् अधोअधोमुखीपुत्रान् तद्ब-
हिरष्टपत्रेषुलोकेशान्बटुरूपान्पूजयेत् तद्बहिः पूर्वेब्राह्मीपुत्रायनमः ईशाने ॐ माहेश्वरीपुत्रायनमः उत्तरे वैष्णवीपुत्रायनमः अग्नि-
लेकौमारीपुत्रायनमः पश्चिमेइंद्राणिपुत्रायनमः निरृतेमहालक्ष्मीपुत्रायनमः याम्येवाराहीपुत्रायनमः वायवेचामुंडापुत्रायनमः त-
थाच निबंधे ब्राह्मिणीपुत्रकंपूर्वेमाहेशीपुत्रमीश्वरे वैष्णवीपुत्रकंसौम्ये कौमारीपुत्रमानले तद्बहिः इंद्राणीपुत्रकंभूयः पश्चिमेपूजयेत्त-
तः महालक्ष्मीसुतंपश्चाद्रक्षोदिशिसमर्चयेत् ॥ ४९८ ॥ वाराहीपुत्रकंयाम्येचामुंडापुत्रमानिले तद्बहिर्दश दिक्षुहेतुकत्रिपुरांतक वेताल

वह्निजिह्वाकालांतककरालकएकपादभीमरूप अचलहाटकेश्वरान्पूजयेत् ततोयोगिनीसहितदिव्ययोगीशायनमः एवंयोगिनीसहि-
तांतरीक्षयोगिनीशायनमः एवंयोगीनीसहितभूयिष्ठयोगिनीशायनमः इति ईशानाग्निनैर्ऋतेषुपूजयेत अस्यपुरश्चरणमेकविंशतिलक्ष-
जपः तथाचवर्णलक्षंजपेन्मंत्रं हविष्यासिजितेंद्रियः तद्दशांशञ्जुहुयात्तिलैर्मधुरसंयुतै ॥ ४९९ ॥ अथबलिदानं पूर्वविघ्नदुर्गरिमारा-
ध्यबलिंदद्यात् शाल्यन्नपलसंसर्पिर्लाजचूर्णानिशर्करा ॥ ५०० ॥ गुडमिक्षुरसापूपोर्मध्वक्तैः परिमिश्रितैः ॥ कृत्वाकवलमाराध्यदेवंप्रा-
गुक्तवर्त्मना ॥ ५०१ ॥ रक्तचंदनपुष्पाद्यैर्निशितस्मैबलिंहरेत् यद्वा अमूनागमजंहत्वाराजसंप्रागुदीरितं ॥ ५०२ ॥ बलिप्रदानसमयेरिपूणां
सर्वसैन्यकं ॥ निवेदयेद्बलित्वेनबटुकायावशेष्टधीः ॥ ५०३ ॥ विदर्भयेच्छत्रुनाम्नाबलिमंत्रंतदासुधीः शत्रुपक्षस्यपिशितंरुधिरंचदिनेदिने
॥ ५०४ ॥ भक्षयस्वगणैःसार्द्धंसारपेयसमन्वितं ॥ बलिमंत्रोयमाख्यातः सर्वेषांविजयप्रदः ॥ ५०५ ॥ अनेनबलिना हृष्टोबटुकःरिपुसैनिकं
॥ सर्वगणेभ्योविभजेदामिषंक्रुद्धमानसः ॥ ५०६ ॥ एवंकृतेपरबलंक्षीयतेनात्रसंशयः ॥ ५०७ ॥ **॥ इति श्री हरिकृष्णवि-
निर्मिते वृ॰ ध॰ उ॰ श्रीबटुकोपासनाध्याये श्रीमद्बटुक भैरवपटल निरूपणंनाम प्रकरणं ॥ ॥**

**॥ अथश्रीबटुकभैरवदीपदानं ॥** उक्तंचशिवागमे ॥ **पार्वत्युवाच ॥** देवदेवजगन्नाथभक्तानुग्रहकारक ॥ दीपदानविधिंब्रूहि
बटुकस्यमहात्मनः ॥ १ ॥ **महादेवउवाच ॥** ॥ नोक्तपूर्वंमहेशानि दीपंवैभैरवस्यच ॥ आपत्कालेमहादेवीदीपयागंसमाचरेत् ॥ २ ॥
नतिथिर्नचनक्षत्रंनयोगःकरणंशशी ॥ नराशिर्नचसूर्यादिग्रहान्नैवविचिंतयेत् ॥ ३ ॥ यदाचोत्पद्यतेकार्यंदीपंतत्रप्रयोजयेत् ॥ त्रिकोणं
चैवषट्कोणमेवंयंत्रंसमुद्धरेत् ॥ ४ ॥ तत्रदीपंप्रतिष्ठाप्ययथोक्तध्यानयोगतः ॥ क्रूरकार्येषुसर्वेषुध्यानंवैतामसंस्मृतं ॥ ५ ॥ वश्येविद्वे-
षणेस्तंभेराजसंपरिकीर्तितं ॥ सात्विकंसर्वकार्येषुध्यानभेदःप्रकीर्त्तितः ॥ ६ ॥ पात्रस्यवर्त्तिकायाश्चमानंतैलस्यसुंदरी ॥ पलैःषोडशकैःपा-
त्रमर्द्धंतैलस्यभामिनी ॥ ७ ॥ वर्त्तिमानंमहेशानि तंतुषोडशकैःशुभैः ॥ सौवर्णराजतंताम्रंदीपपात्रंप्रशस्यते ॥ ८ ॥ त्रिषष्टिपलमानंस्या-
न्महत्कार्येविशेषतः ॥ प्रयोगेषुचसर्वेषुलोहपात्रंप्रशस्यते ॥ ९ ॥ मारणोच्चाटनेचैवमानमेतत्प्रकीर्त्तितं ॥ आसनेउपविश्याथसम्यक्कृवे-

कृष्णकंबले ॥ १० ॥ तद्दिनात्तद्दिनंयावत्तावदष्टोत्तरंशतं ॥ **पार्वत्युवाच** ॥ यः सूचितोपुरानाथविधिर्वैबटुकस्यच ॥ ११ ॥ तंब्रूहियेनदेवे-
शषट्कर्माणिप्रसाधयेत् ॥ **ईश्वर उवाच** ॥ अथातः संप्रवक्ष्यामिबटुकस्यवरानने ॥ १२ ॥ दीपदानंसर्वकार्यसाधनंप्रत्ययावहं ॥ चतुर-
स्त्रांभुवंसम्यक्कल्पयेत्सुरवंदिते ॥ १३ ॥ गोमनेनोपलिप्याथमंडलंरचयेत्ततः ॥ कीलाष्टकंचाष्टदिक्षुदद्याद्दूस्त्रेणवेष्टयेत् ॥ १४ ॥ कीला
न्क्षीरवृक्षस्यकार्याणिकुलसुंदरी ॥ तेषुकीलेषुविधिवत्बलिंदीपसमन्वितं ॥ १५ ॥ पूर्वादिपूजितंरक्तचंदनैः करवीरजैः ॥ ह्रींजयं-
तायकुसुमैः ह्रींमेघोरायसुंदरी ॥ १६ ॥ ह्रींचामीकरायतथा ह्रीं प्रसिद्धायवैनमः ॥ ह्रींतीक्ष्णायप्रचंडायकरालायकपालिने ॥ १७ ॥
तंत्रांतरे जयंतश्चाथघोरोथचामीकरसितांगकौ ॥ भीषणश्चप्रचंडश्चकरालश्चकपालिनः ॥ १८ ॥ नमस्कृत्यगणेशानंगुरुंक्षेत्रेशमे-
वच ॥ तन्मध्येविलिखेत्स्पष्टंरक्तचंदनवारिणा ॥ १९ ॥ चतुरस्त्रसमंबाह्येतन्मध्येतुषडस्त्रकं ॥ तन्मध्येत्र्यस्त्रमालिख्यतत्रदेवंविचिंतयेत्
॥ २० ॥ तंडुलैः पूरयित्वातुरक्तचंदनलोलितैः ॥ पीठपूजांविधायाथपात्रंसंस्थाप्यतत्रवै ॥ २१ ॥ तत्तत्कार्यवशाद्देवीतत्तद्द्रव्यंप्रपूरयेत् ॥ ग-
व्यमाकर्षणेकृत्येकौसुंभंस्तंभनेस्मृतं ॥ २२ ॥ तिलतैलंतथागव्यंघृतंवश्येप्रकल्पयेत् ॥ कटुतैलंद्वेषणेचमारणेराजिकंस्मृतं ॥ २३ ॥ आ-
ज्यंचोष्ट्रंमाहिषंचमेषमुच्चाटनेमतं ॥ अथवातिलतैलंतुसर्वकार्येप्रशस्यते ॥ २४ ॥ बंदीबंधनमोक्षेचतथाभूतपिशाचके ॥ सार्षपंतैल
मापूर्यदीपदानंविधीयते ॥ २५ ॥ शतमष्टोत्तरंचाथपलानिप्रथमेविधौ ॥ अष्टाशीतिद्वितीयेचपरेष्टाविंशतिः प्रिये ॥ २६ ॥ सर्वकार्येषु
देवेशीसंख्याप्रोक्तात्रिधात्रवै ॥ शुभकार्येताम्रमयंविपरीतेतुलोहजं ॥ २७ ॥ शुभेसौम्यमुखोदीपोअशुभेदक्षिणामुखः ॥ शतेनत्रिश-
तेनाथसहस्त्रेणाथवर्तिकां ॥ २८ ॥ कारयित्वाशुभेपात्रेसंस्थाप्यज्वालयेत्तथा ॥ दीपंसम्यक्प्रपूज्याथतत्रसंकल्पमाचरेत् ॥ २९ ॥ प्र-
णवंपूर्वमुध्दृत्यततोलज्जांरमामथ ॥ कामंलज्जांरमामोंचसर्वज्ञेतिपदंततः ॥ ३० ॥ डें तंतथाचचंडेतिपराक्रमपदंततः ॥ डेंतंबटुकमु-
द्धृत्यइमंदीपंततोवदेत् ॥ ३१ ॥ प्रगृहाणचिंतितंचसर्वकार्याणिसाधयेत् ॥ दुष्टान्नाशययुग्मंतेत्रासयेतिपदंद्विधा ॥ ३२ ॥ सर्वतो-
ममरक्षांचकुरुयुग्मंचवर्मच ॥ अस्त्रमग्निवधूः प्रोक्तोदीपदानेमनुस्त्वयं ॥ ३३ ॥ **तंत्रांतरे** ॥ प्रणवंपूर्वमुच्चार्यमायांवाणींततोवदेत् ॥

कमलाकामवाणिंचसर्वज्ञायततोच्चरेत् ॥ ३४ ॥ प्रचंडपराक्रमायबटुकायस्वस्वरूपकं ॥ कार्याणिसाधयद्वंद्वंदुष्टान्नाशयनाशय ॥ ३५॥ सर्वतोममरक्षांचकुरुह्रूंह्रूंह्रुंफट्स्वाहा ॥ अनेनमनुनादेविगृह्यपुष्पाक्षतंजलं ॥ ३६॥ बटुकायइमंदीपंनिवेदयामिसंवदेत् ॥ प्रतिष्ठांपूजनं सांगंबलिंदेवायदापयेत् ॥ ३७ ॥ तेनदीपंपरिज्वाल्यबटुकायबलिंहरेत ॥ तैलाभ्यंगंपुराकृत्वाबटुकंभोजयेत्ततः ॥ ३८ ॥ दधिदुग्धघृता-द्यैश्चवटकैःस्नेहपाचितैः ॥ नवदेदशुभवाक्यंयावद्दीपस्यसाधनं ॥ ३९॥ अथान्यमपिवक्ष्यामिसाधनंपरमाद्भुतं ॥ वश्येविद्वेषणेस्तंभेक-र्त्तव्योयंसुरेश्वरी ॥ ४० ॥ कन्यार्थीचसुतार्थीचदीपंप्रज्वालयेत्ततः ॥ दीपनाशेपुनर्दीपंकृत्वाशांतिंतुकारयेत् ॥ ४१॥ गणेशान्बटुकान्कन्या भोजयेद्विघ्नशांतये ॥ पंचवर्षाभवेत्कन्यानववर्षोगणेश्वरः ॥ ४२॥ षट्चाष्टौबटुकःसाक्षान्नारीस्यात्षोडशाब्दिका ॥ ततोशांतिस्तुतिंकुर्या बटुकस्यमहात्मनः ॥ ४३ ॥ यस्यार्चनेनविधिनाकिमपीहलोकेकर्म्मप्रसिद्धमितिनामफलंप्रसूते ॥ द्वैजंचततसकलसाधकचित्तवृत्तिंचिं-तामणिंसुरगणाधिपतिंनमामि ॥ ४४ ॥ रक्तांबरंज्वलनपिंगजटाकलापज्वालावलीकुटिलचंडधरप्रचंडं ॥ बालार्कद्योतिफलमुसलधातु-वर्णंदेवीसुतंबटुकनाथमहंनमामि ॥ ४५॥ हरतुकुलगणेशोविघ्नसंघावशेषान्नयतुकुलसपर्यापूर्णतांसाधकानां ॥ पिबतुबटुकनाथः शोणितंनिंदकानांदिशतुसकलकामान्लौकिकानांगणेशः ॥ ४६॥ अयंदीपविधिःप्रोक्तोबटुकस्यतवानघे ॥ गोपनीयःप्रयत्नेनसत्यंसत्यं वदाम्यहं ॥ ४७॥ अन्यत्रविशेषः । दीपस्यदक्षिणेभागेदक्षिणाग्रामधोमुखीं ॥ छुरिकांनिखनेद्भूमौशत्रुपक्षनिबर्हिणीं ॥ ४८॥ षो-डशांगुलविन्यासांशलाकांस्वर्णनिर्मितां ॥ दीपस्यदक्षिणेभागेस्थापयेत्साधकोत्तमः ॥ ४९॥ यथाकामंतथाध्यानंकारयेत्साधकोत्तमः ॥ अथजयद्रथयामलमतमनुस्मृत्यश्रीरामचंद्राचार्यः ॥ एवंदीपविधिःप्रोक्तोह्यावरणानिप्रपूजयेत् ॥ ५० ॥ बटुकाष्टकमष्टासुदिक्षुवै भैरवाष्टकं ॥ राकिन्यादिभवेदष्टौपरिवाराष्टकंततः ॥ ५१॥ गणाष्टौशक्तयश्चाष्टौपूजेच्चविशेषतः ॥ अंबाष्टौपादुकाष्टौचसायुधौवाह-नौतथा ॥ ५२॥ परिवारसमायुक्तौसपुत्रौचसपत्निकौ ॥ सर्वान्देवान्प्रपूज्याथावरणेनसमन्वितान् ॥ ५३॥ मध्येतुपूजयेद्देवंबटुकं दीपमध्यतः ॥ पंचोपचारैःसंपूज्यधूपदीपादिभिःक्रमात् ॥ ५४॥ कवचस्तवराजंचआपदुद्धारणंजपेत् ॥ स्तवराजंचकवचंदीपाग्रेप्रप-

ठेत्पुनः ॥५५॥ मंत्रंलक्षंजपेद्देवीकवचमयुतपठेत् ॥ सहस्रंस्तवराजंचकार्यमुद्दिश्यमंत्रवित् ॥ ५६॥ कलौचतुर्गुणंप्रोक्तंदीपाग्रेप्रपठे-
त्सदा ॥ सूर्यास्तकालमारभ्ययावत्सुर्योदयोभवेत् ॥५७॥ तावन्मंत्रंजपेद्धीरोकार्यमुद्दिश्यमंत्रवित् ॥ आदौतुबलिदानंवैपाठहोमादिकं
ततः ॥५८॥ होमांतेचजपांतेच पुनर्बलिंसमुद्धरेत् ॥ अष्टमीदिनमारभ्ययावत्कृष्णाचतुर्दशी ॥५९॥ तावन्मंत्रंजपेद्धीरोसर्वकार्यप्र-
साधनं ॥ नदीतीरेशिवागारेबिल्वमूलेगिरौतथा ॥६०॥ गुहायांसिद्धपीठेचसन्निधौभैरवस्यच ॥ पुत्रःप्राप्तिःसहस्रेस्यात् द्विगुणेच-
धनागमः ॥६१॥ त्रिगुणेबंधनान्मुक्तिः चतुःसंख्येप्रियागमः ॥ बाणसंखेस्तंभनंस्यात् रससंख्येक्षयोभवेत् ॥६२॥ सप्तसंख्येजगद्व-
श्यमष्टसंख्येतुमोहनं ॥ अंकसंख्येमहोत्साहोउच्चाटोदशसंख्यके ॥६३॥ एकादशेनदेवेशीह्यखिलासिद्धयः स्मृताः ॥ लक्षेणैकेन
देवेशीचक्रवर्तीभवेद्ध्रुवं ॥६४॥ कोटिसंख्येमहादेवीभवेद्भैरवसन्निभः ॥ नौकायांव्यवहारेचजपेत्सप्तशतंतथा ॥ ६५॥ कृषिकर्म
णिवाणिज्येरुद्रसंख्याशतानिच ॥ दीपाग्रेकलशाग्रेच त्रिकोणेरसकोणके ॥ ६६॥ अणिमाद्यष्टसिद्धीनां पूजनंपरिकीर्त्तितं ॥ अष्ट
दिक्षुततः कुर्याद्भूतानामपसर्पणं ॥ ६७॥ वैतालाश्चपिशाचाश्चराक्षसाश्चसरिसृपाः ॥ अपःसर्पंतुतेसर्वेयावत्पूजांकरोम्यहं ॥६८॥
गोमयेनोपलिप्तेचभूमौमंडलमालिखेत् ॥ त्रिकोणंरसकोणंचह्यष्टकोणंचभूपुरं ॥६९॥ एवंमंडलमालिख्यदीपपात्रंहिस्थापयेत्
॥ दीपपात्रेचपूर्वोक्तंयंत्रंसंल्लिख्यमंत्रवित् ॥ ७०॥ बीजंविलिख्यतन्मध्येवर्तिंतैलंचनिक्षिपेत् ॥ घृतंवापूरयेद्विद्वान्ततोदीपंप्रबोधयेत्
॥७१॥ ततोदीपस्यप्राणानांप्रतिष्ठापनमाचरेत् ॥ पंचोपचारैर्बटुकंपूजयेत्तत्रमानवः ॥ ७२॥ दीपस्यकलशेतत्रकुर्यादावरणार्चनं
॥ बलिदानंततःकार्यंदीपस्यप्रार्थनाततः ॥७३॥ दीपाग्रेचयथाशक्तिगायत्रींबटुकस्यच ॥ जपेद्दीपंसमर्प्याथिकवचंप्रजपेत्ततः ॥
मंत्रंजप्त्वापुनर्वर्मपठेन्मंत्रंततः परं ॥ स्तवराजंपठित्वातुमंत्रंजप्त्वानिवेदयेत् ॥७५॥ महाभैरवतंत्रमनुस्मृत्याह ॥ पुरुषोत्तम
पादाब्जश्रीब्रह्मार्पितमौलिना ॥ क्रियतेरामचंद्रेणदीपदानविधिः शुभः ॥७६॥ तत्रशुद्धकालः वैशाखश्रावणाश्वीनकार्त्ति-
कादिकपंचके ॥ शुक्लपक्षेप्रकर्त्तव्यायावत्कृष्णाचपंचमी ॥७७॥ सप्तमीपूर्णिमाचैवद्वितीयापंचमीतथा ॥ त्रयोदशीचदश-

मीतृतीयाप्रतिपत्तथा ॥ ७८ ॥ द्वादशीचतथाषष्ठियेतास्युस्तिथयः शुभाः ॥ सौभाग्यशोभनायुष्मान्सुकर्माधृतिप्रीतयः ॥ ७९ ॥
वृद्धिर्वैधृतिपाताश्च एतेयोगाः शुभाः स्मृताः । बालवं कौलवंचैवगरंचेतिशुभानिवै ॥ ८० ॥ ग्रीष्मंविनाशुभाः पंचऋतवः परिकीर्तिताः ॥
मासद्वयात्मकाश्रेष्ठादिनंदिनार्द्धमेवच ॥ ८१ ॥ सूर्योदयंसमारभ्ययावदस्तंगतोरविः ॥ अहोरात्रिप्रमाणेनग्रीष्मादिपरिकीर्त्तिताः ॥
८२ ॥ दिवापूर्वान्हकोकालः रात्रौनिशीथएवच ॥ यद्वासर्वत्ररात्रौतुसूर्यचंद्रपरागयोः ॥ ८३ ॥ अर्द्धोदयेमहाष्टम्यां कालमोहश्चरात्रिके
॥ अथपात्रस्यधातुमान ॥ सौवर्णसिद्धिदंपात्रंवश्येरौप्यंप्रकल्पयेत् ॥ ८४ ॥ विद्वेषणकरंलौहं मारणेमृन्मयंतथा ॥ उच्चाटनकरंकां-
स्यंमोहेपित्तलजंस्मृतं ॥ ८५ ॥ अन्नोक्तसर्वकर्मेषुसर्वाभावेतुताम्रजं ॥ अथसूत्रमानं ॥ श्वेतंशांतौतथापीतंस्तंभेवश्येतुरक्तकम् ॥
८६ ॥ मांजिष्टंद्वेषणेप्रोक्तंमारणेकृष्णासूत्रजं । सर्वाभावेमहादेवीश्वेतसूत्रंप्रशस्यते ॥ ८७ ॥ अथवर्त्तिमान ॥ एकापंचतथासप्तए-
कविंशतिसंख्यया ॥ अयुग्माथप्रकर्त्तव्यायुग्मांनैवतुकारयेत् ॥ ८८ ॥ वर्त्तिरेकाप्रकर्त्तव्यातिस्रोवावर्त्तयस्तथा ॥ अथघृततैलमानं
॥ गोघृतेसर्वसिद्धिः स्यात् माहिषंमारणेस्मृतं ॥ ८९ ॥ उष्ट्रीयंद्वेषणेप्रोक्तं गाडरंशांतिकर्मणि ॥ आजमुच्चाटणेकार्यंसर्वाभावेचगो-
घृतं ॥ ९० ॥ घृताभावेभवेत्तैलं प्रयत्नेनविवर्जयेत् ॥ घृतेनदीपोदातव्यस्तिलतैलेनवापुनः ॥ ९१ ॥ वसामेदोद्भवंतैलं प्रयत्नेन विवर्ज-
येत् ॥ अथपात्रमानं ॥ विंशत्पलमितेपात्रेबुध्योच्छ्रायेषडंगुलं ॥ ९२ ॥ विस्तारे अंगुलान्येवषोडशः परिकीर्तितः ॥ पंचाशत्पलगव्यंच
वश्येचौरादिकर्मणि ॥ ९३ ॥ त्रिंशद्दशपलेपात्रेमानंतद्वत्प्रकीर्तितं ॥ षष्टिपलमितेपात्रेबुध्नोच्छ्राहेनवांगुलं ॥ ९४ ॥ अंगुलानिचतु-
र्विंशदायामेपरिकल्पयेत् ॥ पंचसप्तमितेतैलेसर्वशत्रुविनाशनं ॥ ९५ ॥ द्विपंचाशत्पलेपात्रेबुध्नोच्छ्रायेतुषष्टिमत् ॥ शतपलमिते
तैलेदीपाद्वैरिविनाशनं ॥ ९६ ॥ शतपलमितेपात्रेउच्छ्रायोद्वादशांगुलः ॥ द्वात्रिंशच्चैवआयामेतन्मध्येतुसहस्रकं ॥ ९७ ॥ सर्वक-
र्मणिसिद्धिः स्याद्दिपेपलसहस्रके ॥ सपादशतपात्रेचपंचोत्तरशताधिके ॥ ९८ ॥ पंचदशांगुलोच्छ्रायंव्यायामेषडत्रिंशके ॥ अयु-
तपलदीपश्चनिगडाद्बंदिमुक्तये ॥ ९९ ॥ सहस्रपलदीपेचबंदिमोक्षः प्रजायते ॥ त्रिंशत्पलमितेपात्रेमान्यंचैवतुपूर्ववत् ॥ १०० ॥

त्रिंशत्पलमितेतैले दिनान्येकोनविंशतिः ॥ कन्याभिकांक्षीतैलेन प्रत्यहं दीपमाचरेत् ॥ १०१ ॥ ईप्सितांलभतेकन्यां भैरवस्यप्रसा-
दतः ॥ नृपपलमितेपात्रे उच्छ्रायंचरसांगुलं ॥ १०२ ॥ विंशत्पलमितेदीपे प्रत्यहं विंशतिर्दिनं ॥ सर्वरोगविनाशाय क्षयापस्मार दारुणे ॥
१०३ ॥ दशपलमितेपात्रे बुध्नोच्छ्रायेतुत्रिंशतं ॥ दशपलमितंतैलं प्रत्यहं ससवासरे ॥ १०४ ॥ राजवश्यकरंक्षिप्रंयदिसाक्षाज्जगत्पतिः
त्रिंशत्पलमितेपात्रे बुधोच्छ्राहेतु पूर्ववत् ॥ १०५ ॥ त्रिंशत्पलमितेतैले क्षुद्ररोगविनाशकृत् ॥ एकादशपलमितेउच्छ्रायेतु षडंगुलं ॥ १०६ ॥
पंचविंशत्पलेतैले दीपे भूतादिनाशनं ॥ एकादशपलेपात्रे बुधोच्छ्रायंतु पूर्ववत् ॥ १०७ ॥ नृपपलमितेतैले ग्रहपीडानिवारणं ॥ शतपल
मितेपात्रे बुधोच्छ्रायेतु षोडश ॥ १०८ ॥ व्यायामंतु भवेत्सार्द्ध चतुर्विंशतिरंगुलैः ॥ तन्मध्येच प्रकर्त्तव्योदीपोशतत्रयात्मकः ॥ १०९ ॥ सिंह
व्याघ्रादिसर्पाणां भयंनैवप्रजायते ॥ एकादशपलेपात्रे उच्छ्रायंचैव पूर्ववत् ॥ ११० ॥ अष्टपलघृतोदीपो यात्राकाले प्रकल्पयेत् ॥ त-
स्यमार्गेभयंनास्तिस्वस्थया गृहमाप्नुयात् ॥ १११ ॥ त्रिंशत्पलमितेपात्रे व्यायामेचैवपूर्ववत् ॥ शतपलमितेदीपे मेधारोग्यविवर्धनं ॥
११२ ॥ नित्यदीपप्रमाणेतु पात्रंपलत्रयंस्मृतं ॥ बुधोच्छ्राये भवेत्सार्द्ध मंगुष्टोदरमध्यगः ॥ ११३ ॥ तन्मध्येतु भवेत्तैलं यथाकामनयासुधीः
पलमात्रंपलार्द्धंवादीपंप्रज्वालयेत्सुधीः ॥ ११४ ॥ अंगुष्टोदरचत्वारिव्यायामः परिकीर्त्तितः ॥ एकावर्त्तिप्रकर्त्तव्या एकविंशतितंतुभिः
॥ ११५ ॥ पात्रमध्येमंडलंतु कुर्याद्वैसाधकोत्तमः ॥ षट्कोणांतस्त्रिकोणस्थां मध्येमायांप्रकल्पयेत् ॥ ११६ ॥ तन्मध्येचभवेद्वर्त्तिं ततोदी-
पंप्रकल्पयेत् ॥ भूतशुद्धिं प्रतिष्टांच ऋष्यादिंच षडंगकं ॥ ११७ ॥ मातृकान्यासपूर्वंहि ततोबलिंसमुद्धरेत् ॥ आवरणार्चनकंकुर्यान्मध्ये
देवंप्रपूजयेत् ॥ ११८ ॥ दिग्पालान्लोकपालांश्च समग्रपरिवारतः ॥ सवाहनान्सायुधांश्च पत्नीपुत्रादिभिर्युतान् ॥ ११९ ॥ अपःसर्पण
पूर्वंहि सर्वत्रपूजनंचरेत् ॥ धूपदीपादिनैवेद्यैस्तांबूलारार्त्तिकादिभिः ॥ १२० ॥ यदक्षरपदेनैव सर्वपापक्षमस्वमे ॥ कवचंस्तवराजंचदी-
पाग्रेप्रपठेत्सुधीः ॥ १२१ ॥ ततोमंत्रजपंकुर्याद्देवतायसमर्पयेत् ॥ यंयंचिंतयते कामंतंतंप्राप्नोतिनिश्चितं ॥ १२२ ॥ स्तवराजशते
नैवफलमाप्नोतिमानवः ॥ स्तवराजसहस्त्रेण लभवेवांछितंफलं ॥ १२३ ॥ एकादशसहस्त्रेणतस्यासिद्धिरनेकधा ॥ संपुटस्तवराजे-

नमंत्रस्याष्टोत्तरंशतं ॥ १२४ ॥ पुरश्चरणंतुयः कुर्यादेकादशसहस्त्रकं ॥ यंयंचिंतयतेकामंतंतंप्राप्नोतिमानवः ॥१२५॥ होमादौच
जपादौचबलिदानंप्रकल्पयेत् ॥ होमांतेचजपांतेचबलिद्वयंसुसिद्धिदं ॥१२६॥ रुद्रयामले विशेषः ॥ बिंदुत्रिकोणंषट्कोणंवृ-
त्ताष्टदलकंतथा ॥ दलानिषोडशान्येवचतुरस्त्रंततःपरं ॥१२७॥ एवंयंत्रंसमालिख्यतत्रसंपूज्यदेवताः ॥ तस्योपरिदीपपात्रंस्था-
पयेत्साधकोत्तमः ॥१२८॥ तैलंघृतंवावर्त्तिंचस्थाप्यदीपंप्रबोधयेत् ॥ तैलवर्तिस्थापनेतुइमंमंत्रंसमुच्चरेत् ॥१२९॥ ॐ नमोभगव-
तेबटुकभैरवायदेवीपुत्रायसर्वदुष्टजनमुखस्तंभंकुरुकुरु ॐ ह्रांह्रींह्रूं ठः ठः ठः हुं फट्स्वाहा इत्यनेनाष्टवारंतदभिमंत्र्यनिधा-
पयेत् मूलमंत्रेणतंदीपंततः प्रज्वालयेत्सुधीः ॥१३०॥ दीपार्पणेतुयोमंत्रः सतुपूर्वमुदीरितः ॥ त्रिवारंतंसमुच्चार्यदेवायदीपमर्पये-
त् ॥१३१॥ मूलमंत्रंततोकिंचिज्जप्त्वाबलिंसमर्पयेत् ॥ माषान्नंमाषभक्तंवापात्रेचैवसदीपकं ॥१३२॥ पायसान्नंमोदकंचचणका-
दीनिनिक्षिपेत् ॥ शंखोदकेनसंप्रोक्ष्यधेनुमुद्रांप्रदर्शयेच ॥१३३॥ अमृतीकरणंकृत्वागंधादिभिश्चपूजयेत् ॥ बलिनिवेदनंमंत्रंत्रिवा-
रंचपठेन्नरः ॥१३४॥ बलिपात्रस्यधोभागेत्रिकोणंरसकोणकं ॥ चतुरस्त्रंमंडलंवैकृत्वापात्रंनिधापयेत् ॥१३५॥ बलिनिवेदनमं-
त्रः ॥ ॐ ह्रींबटुकनाथदेवीपुत्रकपिलजटाभारलसत्भास्वर त्रिनेत्रज्वालामुखरितसर्वविघ्नान्निवारय २ सर्वजनवशमानय २
सकलशास्त्रछंदोनिबद्धांवाणीमेकुरु २ इमंयथोपकल्पितंबलिंगृणि २ ईं ब्रांब्रींब्रूं ब्लांब्लीं ब्लूं बलिंगृह्ण २ सिद्धिंदेहि २ हुं फट्स्वा-
हा ॥१३६॥ तस्मिन्दीपेमहेशानिध्यात्वाबटुकभैरवं ॥ छुरिकास्थापनंकृत्वाबलिदानंसमाचरेत् ॥१३७॥ दीपाग्रेत्वशुभांवापिपं-
तितस्यचदर्शनं ॥ अस्पर्शानिष्टवचनमधोवातविसर्जनं ॥१३८॥ वर्जयेच्चप्रयत्नेनसावधानः सदाशुचिः ॥ मार्जारमूषकादिभ्यो
जंतुभ्यः साधकोत्तमः ॥१३९॥ दीपरक्षांप्रकुर्वीतनोचेदापदमाप्नुयात् ॥ अथपुष्पांजलिंदद्यान्मंत्रेणानेनपार्वती ॥१४०॥ अनेन
दीपवर्येणपश्चिमाभिमुखेनच ॥ यथाविधिहिबटुकतथामेस्तुमनोरथाः ॥१४१॥ इत्थंसंपूज्यविधिवत्प्रणमेच्चकृतांजलिः ॥ इ-
तिपुष्पांजलिंदद्यात्साधकोत्तमसिद्धिदां ॥१४२॥ शृणुदेवीप्रवक्ष्यामिमहादीपविधिंशुभं ॥ अभिचारेत्रयंकुर्याद्दक्षिणोत्तरपश्चिमे

॥१४३॥ पुष्पवासिततैलंच सर्वकामफलप्रदं ॥ तिलतैलंश्रियोहेतुः पथिकागमनंप्रति ॥ १४४॥ अलसीतैलमुद्दिष्टंवश्यकर्मणि निश्चितं ॥ सार्षपंरोगनाशायमारणेराजिकोद्भवं ॥ १४५॥ उच्चाटनेकरंजोत्थंविद्वेषमधुवृक्षजं ॥ गोघृतेनकृतेदीपेदेवतांवशमानयेत् ॥ १४६॥ इतितैलमानं ॥ अथपात्रमानं ॥ गोधूमाश्चतिलामाषामुद्गाश्चतंडुलाः क्रमात् ॥ पंचधान्यमिदंप्रोक्तंसर्वदादीपदापने ॥१४७॥ वश्येतंदुलपिष्टोत्थंमारणेमाषपिष्टजं ॥ तिलपिष्टसमुद्भूतमुच्चाटनविधौस्मृतं ॥१४८॥ प्रियस्यागमनेप्रोक्तंगोधूमोत्थंसतंदुलं ॥ मोहनेमुद्गजंप्रोक्तंपात्रद्रव्यमनुक्रमात् ॥१४९॥ सौवर्णंराजतंवापिताम्रजंवापिशक्तितः ॥ पलत्रयमितंदेवीनित्यंदीयेप्रकीर्त्तितं ॥१५०॥ शतसंख्येमहादीपेपात्रंयुग्मशरैः५२स्मृतं ॥ सहस्रपलदीपेतुपात्रंशतपलैःस्मृतं ॥१५१॥ घृतायुतपलेपात्रंस्मृतंपंचशतैःकृतं ॥ ततत्कार्यविभेदेनपात्रंकुर्याद्यथाविधि ॥१५२॥ वश्येभयेविषादेचशस्त्रसंग्रामसंकटे ॥ द्यूतेसैन्येस्तंभनेचविद्वेषोच्चाटमारणे ॥१५३॥ मयोक्तविधिनादीपः कर्त्तव्योभैरवस्यतु ॥ पश्चिमाभिमुखोस्थाप्यः महादीपोमहेश्वरी ॥ १५४॥ साधयेत्सर्वकार्याणिसाधकस्यनसंशयः ॥ अथवारपरत्वेनबलिदानं ॥ रविवारेपायसान्नंसोमवारेचमोदकं ॥१५५॥ भौमेगुडाज्यगोधूमाः बुधेचदधिशर्कराः ॥ गोधूमपूरिकायुक्ताघृतमध्येसुपाचिताः ॥१५६॥ गुरौचणकखंडाज्यंकेवलंचणकंभृगौ ॥ शनौमाषान्नंतैलंचइतिवारबलिः क्रमात् ॥१५७॥ पटले दीपंप्रज्वाल्यदेवेशीबटुकायबलिंहरेत् ॥ त्रिराचम्यचमंत्रेश्चहस्तंप्रक्षाल्यवैतदा ॥१५८॥ हस्तेजलंततोगृह्यविनियोगंपठेत्प्रिये ॥ ततोन्यासंप्रकुर्वीतध्यानंकुर्यात्ततःपरं ॥१५९॥ ध्यानेपूर्वोक्ताद्विशेषः ॥ सात्विकंध्यानमाख्यातंप्रागेवतवसुव्रते ॥ इदानींराजसंध्यानंशृणुवक्ष्येसुरेश्वरी ॥१६०॥ उद्यत्सूर्यसहस्राभंत्रिनेत्रंचन्द्रशेखरं ॥रक्तांगरागमारक्तंमाल्यांबरविभूषितं ॥१६१॥ स्मेराननंनीलकंठंनानाभरणभूषितं ॥ दक्षिणोर्ध्वकरेशूलंतदधोवरमद्रिजे ॥१६२॥ वामोर्ध्वहस्तेदेवेशीकपालंतदधोभयं ॥ दधानंसंस्मरेद्देवंस्युर्नृणामभयप्रदं ॥१६३॥ काम्यकर्मसुदेवेशीध्यायेद्देवंप्रभुंसदा ॥ रुद्रयामले ॥ दक्षेत्रिशूलमभयंकपालंवामकेकरे ॥१६४॥ क्रूरकर्मसुदेवेशीतामसंध्यानमुच्यते ॥ अंजनाचलसंकाश

मुंडमालाविभूषितं ॥ १६५॥ चंद्रखंडलसत्पिंगकेशभारंदिगंबरं ॥ त्रिनेत्रं दक्षिणे हस्तैर्डमरुंचसृणिंतथा ॥ १६६ ॥ खड्गं शूलं चदेवेशीदधानमपरैः करैः ॥ अभयंनागपाशंचघंटांचलत्कपालकं ॥ १६७॥ उन्द्धीदिक्रमतोदेवीभीमदंष्ट्रंभयानकं ॥ सर्वाभरणसंदीप्तंमणिनूपुरमंडितं ॥ १६८॥ किंकिणीजालसंयुक्तं ध्यायेद्बटुकभैरवं ॥ यामलेतु ॥ दक्षिणेभयंवामेवरमितितामसे विशेषः ॥ अन्यत्तुल्यं ॥ सात्विकं ध्यानमाख्यातमपमृत्युनिवारणं ॥ १६९॥ आयुरारोग्यजननमपवर्गफलप्रदं ॥ राजसंधर्मकामार्थसिद्धिदंतामसंप्रिये ॥ १७०॥ शत्रुक्षयकरंभूतकृत्यापस्माररोगनुत् ॥ एवंध्यानंसमाख्यातसाधकाभीष्टसिद्धिदं ॥ १७१॥ निगडेबंधनेप्राप्तेराजसंकटभाग्भवेत् ॥ सार्षपंतैलमापूर्यदीपंप्रज्वालयेत्सुधीः ॥ १७२॥ वर्तिमेकादशशतैः कृत्वाचतंतुभिः शुभैः ॥ सहस्रावर्तनंकृत्वाराजभूपालभेदिह॥ १७३ ॥ शृंखलामोचनंसद्योभवतीतिसुनिश्चितं ॥ कौसुंभंचसुरक्तंचपीतंवाकृष्णमेववा ॥ १७४॥ श्वेतंसर्वार्थदंप्रोक्तमन्यत्कामफलप्रदं ॥ कौसुंभंवश्यकार्येयसुरक्तंप्रीतयेतथा ॥ १७५॥ महिमावृद्धयेपीतंकृष्णंस्यादभिचारके ॥ गौरधेनुघृतेनेवआयुष्यस्याभिवृद्धये ॥ १७६ ॥ शततंतुमितांवर्त्तिंकृत्वादीपंपठेदिह ॥ विनौषधंविनावैद्यंरोगस्यनाशमाप्नुयात् ॥ १७७॥ चंपकस्यचतैलेनदीपोभवतिवश्यकृत् ॥ मल्लिकातैलदीपेनराजाभवतिवश्यतां ॥ १७८॥ माहिषेणघृतेनेह शत्रुनाशोभवेद्ध्रुवं ॥ अजाघृतस्यदीपेनशत्रुभंगोभवेदिह ॥ १७९॥ निर्गुंडीतैलदीपेनशत्रुसेनापराङ्मुखी ॥ एरंडीतैलदीपेन भोगवान्जायतेनरः ॥ १८० ॥ जातितैलेनदीपेनराजमान्योभवेच्छुभः ॥ कपिलायाघृतेनैवभोगवान्जायतेनरः ॥ १८१॥ वातुलतंत्रे ॥ पात्रंतुत्रिपलारभ्यशतसंख्यावधिक्रमात् ॥ त्रिपंचसप्तनवभिः पात्रंकुर्याद्विचक्षणः ॥ १८२॥ द्वात्रिंशत्पलसंख्याकंतैलंतत्रतदर्धकं ॥ चतुर्विंशतिसंख्याकैस्तंतुभिर्वर्त्तिकाभवेत् ॥ १८३॥ मारणोच्चाटणेचैवमानमेतत्प्रकीर्तितं ॥ शत्रुगृहीतराज्यस्यपुनःप्राप्तेश्चसुंदरी ॥ १८४॥ पलानांशतसंख्याकंपात्रंतत्रप्रकल्पयेत् ॥ तदर्धतंतुभिर्वर्तिस्नेहंतस्माच्चतुर्गुणं ॥ १८५॥ कन्यार्थीतुमहादेवीदीपंप्रज्वाल्ययत्नतः ॥ अशीतिपात्रमानंचतदर्धंतैलवर्तिका ॥ १८६॥ एकादशपलैः पात्रंभूतोपद्रवनाशने ॥ महारोगभयेप्राप्तेद्वात्रिंशत्पलसंख्यया ॥ १८७॥ एकादशंषोडशं-

चविंशतिपलसंख्यकं ॥ चतुर्विंशच्चद्वात्रिंशच्चत्वारिंशत्प्रकीर्त्तितं ॥ १८८ ॥ अशीतिशतमानंचतथाचाष्टोत्तरंशतं ॥ पात्रमानंप्रक-
र्त्तव्यंकार्यभेदेनसुंदरी ॥ १८९ ॥ नित्यदीपेपलंत्रीणित्रिपलंस्नेहमीरितं ॥ अष्टाशीतिपलैःपात्रंतथाष्टाविंशतिप्रिये ॥ १९० ॥ व-
र्त्तिश्चैवतथाकार्याशतमेकादशैवतु ॥ सहस्रतंतुभिर्वापित्रिशतंशतमेववा ॥ १९१ ॥ चत्वारिंशच्चपंचाशत्तथाष्टाविंशतिप्रिये ॥ एक
विंशतितंतुभिर्वर्त्तिःकार्यावरानने ॥ १९२ ॥ कौसुंभंकर्बुरंस्वेतंरक्तंपीतंचश्यामकं ॥ स्वेतंतुसर्वकार्येषुप्रशस्तंसूत्रनिर्मितं ॥ १९३ ॥
किंचवेदिकायांलिखेद्यंत्रंततोकीलाष्टकार्चनं ॥ दीपपात्रंचसंस्थाप्यतैलवर्त्तिसमन्वितं ॥ १९४ ॥ दीपंप्रज्वाल्यमंत्रेणप्राणस्थापनमा-
चरेत् ॥ भैरवंतत्रसंपूज्यसांगावरणकंप्रिये ॥ १९५ ॥ बलिंदत्वाविधानेनतदग्रेस्थापयेत् घटं ॥ ताम्रंवापिसुवर्णंवाजलेनापूर्यमंत्रवित्
॥ १९६ ॥ वेदोक्तेनविधानेनसप्तधान्यादिपल्लवैः ॥ तस्योपरिन्यसेत्पूर्णपात्रंतस्योपरिन्यसेत् ॥ १९७ ॥ यंत्रंवैभैरवस्याथपूजयेच्च
यथाविधि ॥ सांगंसावर्णकंदेवंपूजयेच्चविचक्षणः ॥ १९८ ॥ बलिंदत्वाथनिराज्यतदग्रेजपमाचरेत् ॥ स्तोत्रपाठादिकंसर्वंपुरश्चरण
माचरेत् ॥ १९९ ॥ कार्यस्यचानुसारेणब्राह्मणान्वृणुयात्प्रिये ॥ पंचसप्ततथाष्टौवाएकादशावधिस्तदा ॥ २०० ॥ तान्सर्वान्भ-
क्षभोज्यैश्चवस्त्रैश्चैवमनोहरैः ॥ आसनोदकपात्रैश्चपूजयित्वाप्रणम्यच ॥ २०१ ॥ आचार्यमग्रतःकृत्वादीपकार्येनियोजयेत् ॥
आसनेउपविश्याथतैरेवब्राह्मणैःशुभैः ॥ २०२ ॥ यावद्दीपसमाप्तिःस्यादशुभंनैवभाषयेत् ॥ दधिश्चचणकाश्चैववटकैःस्नेहपाचितैः
॥ २०३ ॥ अपूपैर्मधुसंयुक्तैर्बलिर्देयोदिनेदिने ॥ दीपनाशेपुनर्दीपंकृत्वाशांतिंसमाचरेत् ॥ २०४ ॥ वमनेचतथाशब्देफक्कारेचटचटेघ-
टे ॥ एवंजातेकृतेशांतिश्शुभंभवतिनान्यथा ॥ २०५ ॥ मद्यमांसादिभिर्देयोभैरवस्यबलिःप्रिये ॥ छागादिभिर्बलिर्देयःशांतिस्तोत्रंपठे-
त्सुधीः ॥ २०६ ॥ साधकान्भोजयेत्पश्चान्नरनारीश्चकन्यकाः ॥ गणेशान्बटुकांस्तत्रभोजयेद्विघ्नशांतये ॥ २०७ ॥ एवंसंतोष्यविधिवच्छां
तिस्तोत्रंपठेत्सुधीः ॥ अथबलिदानमंत्रः ॥ पशुपालायविद्महेशिरछेदायधीमहि तन्नःपशुःप्रचोदयात् ॥ २०८ ॥ ॐ अलिपिशितमां-
सान्नबलिंगृह्ण २ मांरक्ष २ दुंदुर्गायैनमः अलिपिशिपिशितमांसान्नबलिंगृह्ण २ शत्रुपक्षस्यरुधिरंपिशितंदिनेदिनेभक्षय २ गणैःसार्धं-

सारमेयसमन्वितःसर्वगणेभ्योनमः आमिषंगृह्ण २ भक्षय २ मांरक्ष २ स्वाहा ॥२०९॥ ॥ अथदीपदानप्रयोगः ॥ ॥
तत्रात्मनोयजमानस्य चंद्रतारानुकूले शुभेह्नि तिथिवासरलग्नेषु त्वरितकार्यंचेदमृतघटीषु शुभहोरायांवादीपारंभंकुर्यात् सच ग्रहणे संक्रांतौकृष्णाष्टम्यांदुर्गोत्सवेऽर्धोदयादिमहापर्वसुकृतस्तात्कालिकफलप्रदोभवति ॥ ॥ अथदीपदानसंभाराः ॥
कपिलागोमयं चिंचाद्याम्लद्रव्यंयथाकामनयादीपपात्रंयथोक्तमाज्यंतैलंवा यथोक्तवर्त्तयः शीघ्रकार्येपात्रपल ६४ द्रव्यपल १०८ तंतु १००० द्वितीयपक्षेपात्रपल ३२ द्रव्यपल ८४ तंतु ३०० मध्यमप्रकारेपात्रपल १६ द्रव्यपल २८ तंतु १०० कनिष्टपक्ष पात्रपल ८ द्रव्यपल ८ तंतु १६ नित्यदीपेपात्रपल ३ द्रव्यपल १। तंतु २१ शुभेदीपमुखं उत्तरे साधकोपूर्वाभिमुखः आधारयंत्रमुखंउत्तरे ॥ अशुभेदीपयंत्रसाधकानांमुखंदक्षिणे नित्येषडंगुलानिद्धकीलानि नैमित्तिकेद्वादशांगुलानिकीलानि ८ दीपाग्रेप्रथमकीलपूजनं दक्षिणावर्त्तेदीवडी ८ कीलप्रत्ये १ वशीकरणेमोहने ३ शुभावहा ॥ मारणोच्चाटनेआकर्षणेविद्वेषणे ४ अखंड तंदुलाः रक्तचंदनंकरवीरादिकुसुमानि रक्तक्षौम्यं तीक्ष्णछुरिकां पंचगव्यं स्वर्णादिशलाकां सदशावासोयुगलानि नालिकेल बिल्वफलंचंदनंताम्रकुंभः पूगीफलानि अष्टगंधं यंत्रंपत्रं शरावः स्वादुफलानि पंचपल्लवाः कुंकुमसिंदुरादिपूजांसामग्री ब्राह्मणानांवरुणसामग्री नित्यदक्षिणा पात्रसामग्री ॥ तत्रशकुनानिनिरीक्ष्य दीपदानात्पूर्वदिनेसामग्रींसंपाद्य आचार्यो यजमानश्चएकभक्तंकृत्वाऽपरदिनेकृतोपवासोभूमौस्वपेत् अपरेद्युर्दीपदानदिने ब्राह्मेमुहूर्त्तेचोत्थाय गुरुंगणपतिंस्मृत्वा आवश्यकं निवृत्य दंतान्संशोध्याचम्यस्नात्वा प्राणानायम्य नित्यसंध्यांचकृत्वाकर्मसमाप्य पूर्वोक्तसंभारान्संभृत्य कंबलाद्यासने भूपूविश्य आदौगणपतिपूजनंकृत्वा अर्घसंपूटंकृत्वा अद्येत्यादिसंस्मृत्यश्रीबटुकभैरवप्रीत्यर्थं दीपदानंकर्त्तुं ममेप्सितफलावाप्त्यै आचार्यत्वामहंवृणे इत्थिवृत्वा वस्त्रभूषणानिनिवेद्य दक्षिणांदत्वा भक्त्यासमागतोहंते पादयोर्भक्तवत्सलः दीपकार्यंचभवतासंपाद्यंवैनमोनमः ॥१॥ इतिमंत्रेणदंडवन्नमस्कृत्य अन्यान् त्रीन्पंचसप्तनवैकादशवाब्राह्मणान्वृणुयात्

तैः ब्राह्मणैः सह पुण्याहवाचनादिनिनांदिश्राद्धांतानिकृत्वा पश्चात्तैर्ब्राह्मणैः सहाचार्यो भूशुद्धिभूतशुद्धिप्राणप्रतिष्ठांतर्मातृकाब-
हिर्मातृकान्यासान् मूलमंत्रस्यऋष्यादिन्यासकरषडंगन्यासांगन्यासपदन्यासाक्षरन्यासैकादशन्यासपीठन्यासादीन् पद्धत्यु-
क्तमार्गेणकृत्वा सपादहस्तां समंततश्चतुरस्रांचतुरंगुलोच्चांदीपवेदीं शोधितस्थले निर्माय कपिलागोमयेनोपलिप्य तत्ररक्तचंदने-
नविंदुत्रिकोणषट्कोणवृत्ताष्टदलचतुर्द्वारसंयुतं यंत्रंविलिख्य ततोदीपवेदिकाग्रे कलशंसंस्थाप्य तंदुलेनाष्टदलंकृत्वा तदुपरि
कलशं संस्थाप्य भूरसीतिभूमिंप्रार्थ्य आजिघ्रेतिकलशं महीद्यौरितिजलं याफलिनीतिफलं हिरण्यगर्भेतिसुवर्णमुद्रा अ-
श्वत्थेतिपंचपल्लवाः सुजातोज्योतिषेतिवस्त्रयुगं पूर्णादर्वीतिपूर्णपात्रं तदुपरिपूजायंत्रं मध्येसुवर्णरचितांमूर्त्तिंसंस्थाप्य अ-
ग्न्युत्तारणं लोहोत्तारणं कृत्वा तदग्रे पात्रस्थापनपद्धतिप्रोक्तविधिनाकृत्वा अंतर्यागंकृत्वा तन्मयोभूत्वा बहिर्यागं आवर्ण
पूजांकृत्वाबलिदानादिनीराजनांतंकृत्वाहोमंसंपाद्य पुष्पांजलिंदत्वादेवाज्ञांगृहीत्वा दीपदानंकुर्यात् सयथा आसने उपविश्य
वामेगुरुभ्योनमः दक्षिणेगणपतयेनमः हृदिबंबटुकायनमः इतिनमस्कृत्य अद्येत्यादिप्रयोगमुच्चार्यममयजमानस्य वासकल
मनोरथसिद्ध्ये प्रयोगानुसारेणचत्वारिंशद्दिनंवाष्टविंशतिदिनंवा एकविंशद्दिनंवापंचदशदिनंवासप्तदिनपर्यंतं अमुकसंख्याक
मितेन पात्रेण घृतेनतैलेनवा अमुकसंख्याभिवर्त्तिभिर्दीपदानमहंकरिष्ये इतिसंकल्पः ॥ ॥ ॐ अस्यश्रीबटुकभैरवदीप-
दानमालामंत्रस्य मन्मथऋषिः पंक्तिछंदः आपदुद्धारकबटुकभैरवो देवता बंबीजं ह्रीं शक्तिः ममसर्वमनोरथसिद्ध्ये दीपदाने विनि-
योगः अथमालामंत्रन्यासः मन्मथऋषयेनमः शिरसि पंक्तिछंदसेनमः मुखे भैरवदेवतायेनमः हृदये बंबीजायनमः गुह्ये ह्रींशक्तये
नमः पादयोः विनियोगायनमः सर्वांगे अथबीजशक्तिन्यासः ह्रांबां अंगुष्ठाभ्यांनमः हृदयाय ह्रींबींतर्जनीभ्यांनमः शिरसे
ह्रूंबूंमध्यमाभ्यांनमः शिखायै ह्रैंबैं अनामिकाभ्यांनमः कवचाय ह्रौंबौं कनिष्ठिकाभ्यांनमः नेत्र ह्रः बः करतलकरपृष्ठाभ्यां
नमः अस्त्रायफट् इतिकरषडंगबीजशक्तिन्यासः ॥ प्रयोगानुसारेणसात्विकंराजसंतामसंध्यानंकृत्वा ततः पूर्वोक्तदीपवे-

दी उपरिलिखितंयत्यंत्रंतं अक्षतैः पूरयित्वा तस्याः वेद्याः अष्टदिक्षु खदिर वृक्षोद्भवान ष्टकीलान् निखाय पूजनंकुर्यात् तद्यथा तेषुकी-
लेषुपूर्वादि दिशामारभ्य माषान्नचणकादि दीपयुतंसाधारं बलिंसंस्थाप्य रक्त चंदन लोलितैः करवीर कुसुमाक्षतैः अस्त्रायफट् इतिब-
लिंनिधाय गंधादिभिः जयंतं संपूज्य पूर्वे ॐ ह्रींजयंत भैरव एहि २ इमंसदीपं माषान्नबलिं गृह्ण २ मांरक्ष २ अभीष्टं कुरु २ स्वाहा
ॐ ह्रींजयंतभैरवायनमः १॥ इतिबलिंदत्वा आग्नेये पूर्ववत् अघोरं संपूज्य ॐ ह्रीं अघोर भैरव एहि २ इमंसदीपं माषान्न
बलिंगृह्ण २ मांरक्ष २ अभीष्टं कुरु २ स्वाहा ॐ ह्रीं अघोर भैरवायनम इतिबलिंदत्वा २ दक्षिणे पूर्ववत् चामीकरं संपूज्य ॐ ह्रीं
चामीकरभैरव एहि २ इमंसदीपं माषान्नबलिंगृह्ण २ मांरक्ष २ अभीष्टं कुरु २ स्वाहा ॐ ह्रीं चामीकर भैरवायनम इति बलिंदत्वा ३
नैऋत्ये पूर्ववत् असितांगंसंपूज्य ॐ ह्रीं असितांग भैरव एहि २ इमंसदीपं माषान्नबलिं गृह्ण २ मांरक्ष २ अभीष्टंकुरु २स्वाहा
ॐ ह्रीं असितांग भैरवायनमः इतिबलिंदत्वा ४ पश्चिमे पूर्ववत् भीषणं संपूज्य ॐ ह्रीं भीषण भैरव एहि २ इमंसदीपं माषान्न
बलिंगृह्ण २ मांरक्ष २ अभीष्टं कुरु २ स्वाहा ॐ ह्रीं भीषणभैरवायनमः इतिबलिंदत्वा ५ वायव्ये पूर्ववत् प्रचंडं संपूज्य ॐ ह्रीं
प्रचंड भैरव एहि २ इमंसदीपं माषान्नबलिंगृह्ण २ मांरक्ष २ अभीष्टंकुरु २ स्वाहा ॐ ह्रीं प्रचंड भैरवायनमः इतिबलिंदत्वा ६
उत्तरे पूर्ववत् कराल भैरवं संपूज्य ॐ ह्रीं कराल भैरव एहि २ इमंसदीपं माषान्नबलिं गृह्ण २ मांरक्ष २ अभीष्टंकुरु २ स्वाहा ॐ
ह्रीं कराल भैरवायनमः इतिबलिंदत्वा ७ ईशान्ये पूर्ववत् कपाल भैरवं संपूज्य ॐ ह्रीं कपाल भैरव एहि २ इमंसदीपं माषान्न
बलिंगृह्ण २ मांरक्ष २ अभीष्टं कुरु २ स्वाहा ॐ ह्रीं कपाल भैरवायनमः इतिबलिंदत्वा ८ इत्यष्टदिक्षु बलिदानेन संपूज्य गुरु
भ्योनमः परमगुरुभ्योनमः परात्परगुरुभ्योनमः परमेष्टिगुरुभ्योनमः ग्लौं गणपतयेनमः क्षौं स्थानक्षेत्रपालायनमः इतिनत्वा
रक्तचंदनेनताम्रपात्रोपरिदीपयंत्रं लिखेत् त्रिकोणं षट्कोणं चतुरस्रं ताम्रपात्रोत्कीर्णंवातत्रसंस्थाप्य रक्तचंदनाक्तैस्तंदुलैः पूरयित्वा-
तत्रपीठशक्तिंपूजयेत् ॐ मंडूकायनमः ॐ कालाग्निरुद्रायनमः ॐ मूलप्रकृत्यैनमः ॐ आधारशक्त्यैनमः ॐ कूर्मायनमः

ॐ अनंतायनमः ॐ पृथिव्यैनमः ॐ सुधांबुधयेनमः ॐ मणिद्वीपायनमः ॐ चिंतामणिगृहायनमः ॐ स्मशानायनमः ॐ पारिजातायनमः ॐ रक्तवेदिकायैनमः ॐ मणिद्विपायनमः ॐ धर्मायनमः ॐ ज्ञानायनमः ॐ वैराग्यायनमः ॐ ऐश्वर्यायनमः ॐ अधर्मायनमः ॐ अज्ञानायनमः ॐ अवैराग्यायनमः ॐ अनैश्वर्यायनमः ॐ आनंदकंदायनमः ॐ संविन्नलायनमः ॐ सर्वतत्वात्मकपद्मायनमः ॐ प्रकृतिमयपत्रेभ्योनमः ॐ विकारमयकेसरेभ्योनमः ॐ पंचाशद्वर्णबीजाढ्यकर्णिकायैनमः ॐ अंद्वादशकलात्मनेसूर्यमंडलायनमः ॐ ऊं षोडशकलात्मनेचंद्रमंडलायनमः ॐ मंदशकलात्मनेवन्हिमंडलायनमः ॐ संसत्वायनमः ॐ रंरजसेनमः ॐ तंतमसेनमः ॐ आं आत्मनेनमः ॐ अं अंतरात्मनेनमः ॐ पंपरमात्मनेनमः ॐ ह्रींज्ञानात्मनेनमः ॐ परतत्वांतपीठदेवताभ्योनमः ॐ वामायैनमः ॐ ज्येष्टायैनमः ॐ रौद्र्यैनमः ॐ काल्यैनमः ॐ कलविकरण्यैनमः ॥ ॐ बलविकरण्यैनमः ॥ ॐ बलप्रमथिन्यैनमः ॐ सर्वभूतदमन्यैनमः ॐ मनोन्मन्यैनमः ॐ नमोभगवते सकलगुणात्मशक्तियुक्ताय अनंताय योगपीठात्मनेनमः इतिपीठंसंपूज्य ततोषट्कोणे ह्रांबांहृदयायनमः हृदयंपूजयामि । ह्रींबीं शि॰पू॰ । ह्रूं बूं शिखापू॰ । ह्रैं बैं क॰पू॰ । ह्रौं बौं ने॰पू॰ । ह्रः बः अ॰ पूजयामि इतिसंपूज्य तत्रयथाकामनयाकृतंस्वर्णादिदीपपात्रंसंस्थाप्य गायत्रीमंत्रेण गोघृतं तिलादितैलंवासंपूर्य तत्र गायत्रीमंत्रेण यथाकामनासंख्यवर्तिंनिधाय तंतुसंख्यायावंतितावद्भिर्मंत्रावृत्तिभिरभिमंत्र्य मूलमंत्रेणदीपानुरूपांशलाकांनिधाय दक्षिणधारांछुरिकांनिखाय ॐ ह्रीं छ्रीं छुरिके ममशत्रून्छेदिनी रिपून्निर्दलय २ मांपाहि २ स्वाहा इतिछुरिकांसंपूज्य ॐ ह्रां ह्रीं सर्वांगसुंदर्यैशलाकायैनमः इतिशलाकांसंपूज्य पूर्वसंस्थांवा उत्तरसंस्थांवा पश्चिमसंस्थांवा शुभकार्ये अशुभे दक्षिणसंस्थांवर्त्तिंनिधाय अद्येत्यादि अमुककामनासिद्ध्ये दीपदानंकरिष्ये इतिसंकल्प्य मूलेनगायत्रीमंत्रेणवादीपंप्रज्वालयेत् ततः पूर्ववत् ऋष्यादिषडंगंकृत्वादीपंसंकल्पयेत् ॥ तत्रमंत्रः ॐ ह्रीं ऐं श्रीं क्लीं ऐं ह्रीं श्रीं सर्वज्ञायप्रचंडपराक्रमायबटुकाय इमंदीपंगृहाण सर्वकार्या-

णिसाधय २ दुष्टान्नाशय २ त्रासय २ सर्वतो मम रक्षां कुरु २ हुंफट्स्वाहा इतिमंत्रेणाक्षत चंदन पुष्पसहितं जलं दीपाग्रे निक्षिपेत् पु-
नर्दक्षहस्ते जलमादाय गृहाण दीपं देवेश बटुकेश महाप्रभो ममाभीष्टं कुरु क्षिप्रमापद्भ्यो मां समुद्धर मूलमुच्चार्य बटुकाय इमं दीपं निवे-
दयामि नमः इति जलं भूमौ निक्षिपेत् ततो दीपस्य प्राणप्रतिष्ठां कुर्यात् ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हौं अं क्षं सं हंसः ह्रीं अं हंसः अ-
स्य दीपस्य प्राणा इह प्राणाः ॐ आं २४ जीव इह स्थितः ॐ आं २४ सर्वेंद्रियाणि स्थितानि ॐ आं २४ वाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वा
घ्राणप्राणा इहागत्य सुखं चिरं तिष्ठंतु स्वाहा इति प्राणप्रतिष्ठां कृत्वा दीपबटुकं आवाह्य यथाकामनया ध्यात्वा आवाहनादिमुद्राः प्रद-
र्श्य मूलेन गंधाक्षत पुष्प धूप दीप नैवेद्यादि पंचोपचारैः संपूज्य दीपकलशोपरि आवरणपूजां कुर्यात् तद्यथा ॐ असितांग भैरवाय नमः
असितांगभैरवं पू॰ त॰ एवं सर्वत्र ॐ रुरुभैरवाय॰ ॐ चंडभैरवाय॰ ॐ क्रोधभैरवाय॰ ॐ उन्मत्तभैरवाय॰ ॐ कपालभैरवाय॰ ॐ
भीषणभैरवाय॰ ॐ संहारभैरवाय. अभीष्टसिद्धिं मे देहि शरणागतवत्सल भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनं ॥१॥ ह्रां बां हृदया
य नमः हृदयं पूजयामि॰ ह्रीं बीं शिर॰ ह्रूं बूं शिखा॰ ह्रैं बैं क॰ ह्रौं बौं नेत्र॰ ह्रः बः अ॰ अभीष्ट॰ द्वितीयावरणार्चनं ॥ २ ॥ ॐ
डाकिनीपुत्रकेभ्यो॰ ॐ राकिनीपुत्रकेभ्यो॰ ॐ लाकिनीपुत्रकेभ्यो॰ ॐ काकिनीपुत्रकेभ्यो॰ ॐ शाकिनीपुत्रकेभ्यो॰ ॐ हाकिनी
पुत्रकेभ्यो॰ ॐ मालिनीपुत्रकेभ्यो॰ ॐ देवीपुत्रकेभ्यो॰ ॐ उमापुत्रकेभ्यो॰ ॐ रुद्रपुत्रकेभ्यो॰ ॐ मातृपुत्रकेभ्यो॰ ॐ ऊर्द्ध्व-
मुखीपुत्रकेभ्यो॰ ॐ अधोमुखीपुत्रकेभ्यो॰ अभीष्टसि॰ तृतीयावरणार्चनं ३ पूर्वे ॐ ब्राह्मीपुत्रकाय॰ ईशाने ॐ माहेश्वरीपुत्रका
य॰ उत्तरे ॐ वैष्णवीपुत्रकाय॰ वायव्ये ॐ कौमारिपुत्रकाय॰ पश्चिमे ॐ इंद्राणीपुत्रकाय॰ नैरृत्ये ॐ महालक्ष्मीपुत्रकाय॰ द-
क्षिणे ॐ वाराहिपुत्रकाय॰ आग्नेये ॐ चामुंडापुत्रकाय॰ अभीष्ट॰ चतुर्थावरणार्चनं ४ दशदिक्षु प्रदक्षिणाक्रमेण ॐ हेतुकाय॰
ॐ त्रिपुरांतकाय॰ ॐ वेतालाय॰ ॐ अग्निजिह्वाय॰ ॐ कालांतकाय॰ ॐ करालाय॰ ॐ एकपादाय॰ ॐ भीमरूपाय॰
ॐ अचलेश्वराय॰ ॐ हाटकेश्वराय॰ अभीष्ट॰ पंचमावरणार्चनं ५ ॐ श्रीकंठेशाय॰ अनंतेशाय॰ सूक्ष्मेशाय॰ त्रिमूर्त्तीशाय॰

अमरेशाय॰ अर्घीशाय॰ भारभूतीशाय॰ अतिथीशाय॰ स्थाएवीशाय॰ हरेशाय॰ झिंटीशाय॰ भौक्तिकेशाय॰ सद्योजातेशाय॰
अनुग्रहेशाय॰ अक्रूरेशाय॰ महासेनेशाय॰ क्रोधीशाय॰ चंडेशाय॰ पंचांतकेशाय॰ शिवोत्तमेशाय॰ एकरुद्रेशाय॰ कूर्मे
शाय॰ एकनेत्रेशाय॰ चतुराननेशाय॰ अजेशाय॰ शर्वेशाय॰ सोमेशाय॰ लांगलीशाय॰ दारुकेशाय॰ अर्धनारीश्वराय॰
उमाकांतेशाय॰ आषाढीशाय॰ दंडीशाय॰ अत्रीशाय॰ मीनेशाय॰ लोहितेशाय॰ शिखीशाय॰ छागलेशाय॰ द्विरंडेशाय॰
महाकालेशाय॰ वालीशाय॰ भुजंगेशाय॰ पिनाकीशाय॰ खड्गीशाय॰ बकेशाय॰ श्वेतेशाय॰ भृग्वीशाय॰ देवदक्षिणे
लकुलीशाय॰ शिवेशाय॰ संवर्त्तकेशाय॰ अभीष्ट॰ षष्ठावरणार्चनं ६ भूपुरस्येशाने योगिनीसहितद्युस्थयोगीश्वरेभ्योन-
मः योगिनीसहितेभ्योतरीक्षयोगीश्वरेभ्यो॰ योगिनीसहितेभ्यो भूमिस्थयोगीश्वरेभ्यो॰ सुशक्तिकेभ्योयोगिनीसहितेभ्यो सर्व
योगिभ्यो॰ अभीष्ट॰ सप्तमावरणार्चनं ७ पुनर्मूलेन गंधपुष्पधूपदीपनैवेद्यादिभिर्बटुकं संपूज्य बलिं दद्यात् दीपस्य वाम-
भागे त्रिकोणवृत्तषट्कोण मंडलं कृत्वा बलिमंडलाय नमः इतिगंधाक्षतैः संपूज्य तत्राधारं संस्थाप्य तत्र क्षत्रियादिभिः समांसोबलि
र्देयः शाल्योदनशर्करालाजाचूर्णगुडापूपपशष्कुली समूहसूपपायसान्नादि घृतप्लुतमनेक जातीयं बलिद्रव्यं त्रिमधुयुतं घृतमधुशर्क-
रामोदकमाषकवटानि विविधभक्ष्यद्रव्याणिवायथासंभवं माषमुद्गान्नप्रधान बलिद्रव्यं संस्थाप्य बलिद्रव्योपरि घृतं रक्तपु-
ष्पं पिष्टदीपं च संस्थाप्य आचम्य मूलेन प्राणानायम्य देशकालौ संकीर्त्य अमुकफलावाप्तये श्रीबटुकभैरवप्रीतये अमुकद्रव्येण
बलिदानमहं करिष्ये इति संकल्प्य बंबटुकबलिद्रव्याय नम इति मंत्रेण गंधाक्षतपुष्पैः बलिद्रव्यं संपूज्य वामकरांगुष्ठेनावष्टभ्य द-
क्षहस्ते जलमादाय मूलमुच्चार्य ॐ एहि २ विदुषिपुरभंजय २ नर्तय २ विग्रह २ महाभैरवबटुकबलिं गृह्ण २ स्वाहा एह्येहि दे-
वीपुत्रबटुकनाथकपिलजटाभार भासुर त्रिनेत्र ज्वालामुखसर्वविघ्नान्नाशय २ सर्वोपचार सहितं बलिं गृह्ण २ स्वाहा इति मंत्रा
भ्यां जलमुत्सृजेत् समांसबलिपक्षे पशुपाशाय विद्महे शिरछेदाय धीमहि तन्नः पशु प्रचोदयात् ॐ अलिपिशितमांसान्न-

बलिंगृह्ण २ मांरक्ष २ हुंदुर्गायैनमः अलिपिशितमांसान्नबलिंगृह्ण २ शत्रुपक्षस्यरुधिरं पिशितं दिनेदिने भक्षय २ गणैः सार्द्ध सारमेयसमन्वितः सर्वगणेभ्योनमः आमिषंगृह्ण २ भक्षय २ मांरक्ष २ स्वाहा इति मंत्राभ्यांजलमुत्सृजेत् ततोस्वहस्तेजलमादायेदंबलिं भुंजानंवरदंप्रभुंध्यायन् ततोदीपपात्राभिमुखंयंत्रमुधृत्य प्रथमंकलशस्थापनादिपूजनंनकृतंचेदत्रावसरेपूजनं पद्धतिरीत्याविधिवत्पूजयेत् ततोऽष्टोत्तरसहस्रमष्टोत्तरशतंयथाशक्तिमूलंप्रजप्य अष्टोत्तरशतनामस्तोत्रंच एकविंशतिवारं एकादशवारंवाशतवारंवा महाप्रयोगश्चेत्सहस्रवारंवाब्राह्मणैः सहावृत्यमंत्रंप्रजप्य गुह्यातिगुह्येतिमंत्रेणजपंसमर्प्य ततोस्तोत्रकवचसहस्रनामादिदीपसमाप्तिपर्यंतंप्रत्यहंपाठादिकार्यं यावद्दीपंतावदशुभंनवदेत् क्रोधपरनिंदापैशून्यपरद्रोहपरस्त्रीषुपराङ्मुखोभवेत् ततोबटुकान् कुमारिकांसुवासिनीश्च पायसान्नैर्वटकैः मोदकैश्चणकैश्च नानाभक्ष्यभोज्यैश्चतर्पयेत् ततोआचार्योस्वयंवा शांतिस्तोत्रंपठेत् सयथा यस्यार्चनेनविधिनाकिमपीहलोकेकर्मप्रसिद्ध इतिनामफलंप्रसूते तंसंततं सकलसाधकवांछितार्तिचिंतामणिंसुरगणाधिपतिंनमामि ॥१॥ रक्तांबरंज्वलनपिंगजटाकलापं ज्वालावलीकुटिलचंद्रधरंत्रिनेत्रं बालार्कधामफलकांचनतुल्यवर्णं देवीसुतंबटुकनाथमहं नमामि ॥२॥ हरतुकुलगणेशोविघ्नसंधानशेषान् नयतुकुलसपर्यापूर्णतांसाधकानां पिबतुबटुकनाथः शोणितंनिंदकानां दिशतुसकलकामान् साधकानांगणेशः ॥३॥ सततविततेजश्चक्रभासाविनम्रग्रसनसमुदितोवैश्वासंसंदोहनाभिः प्रलयनयननाभिकिंतुरात्मोद्भवाग्निर्भवतुभुवनगर्भो भैरवोनः पुनातु ॥४॥ याकाचिद्योगिनीरौद्रासौम्याघोरतरापरा गृह्यतांबलिपूजांसाममव्याधिंव्यपोहतु ॥५॥ नंदंतुसाधकाः सर्वेविनश्यंतुप्रदूषकाः अवस्थाशांभवीमेस्तुप्रसन्नोस्तुगुरुः सदा ॥६॥ इतिपठित्वा पश्चात् जपदशांशेन होमादिब्राह्मणभोजनांतैः संतर्प्य ब्राह्मणान् जपानुसारेण दक्षिणाभिः संतोष्य आचार्यकार्यानुसारेण दक्षिणावस्त्रालंकारादिभिः संतोष्य प्रणमेत् ॥ अथवीरसाधनप्रयोगः ॥

तत्रसाधकेंद्रः कृतनित्यक्रियः पालाशपत्रकृतषोडशपुटेषुजलेनप्रक्षालितान् सुपक्वानपक्वान्वामाषान् मुद्गान् मसूरान् चणकान्

ओदनक्षीरं अपूपान् सुहालीन् प्रत्येकमेकैको पदार्थः द्वेद्वे पात्रेएवं षोडशपात्रेसंपूर्य अन्यपात्रेकिंचिदधिकंच पूर्वोक्तंसर्वं कन्य-
याकर्त्तितंकार्पाससूत्रं कुंकुमेनरंजितान् क्षीरवृक्षभवानष्टौकीलान् स्तंभार्थमेकंकीलंतेभ्यःस्थूलं एवंनवकीलान् गंधाक्षतपुष्प
धूपदीपान् अष्टौतांबूलान् फलानिच गृहीत्वा उत्तरसाधक सहितः श्मशाननिकटे गत्वा पादौ प्रक्षाल्य आचम्य स्वेष्टदेवतांस्मृत्वा
कृतांजलिः इदंवाक्यंवदेत् अत्रस्मशानेयाः काश्चिद्देवतानिवसंतिहि ताः प्रयच्छंतुमेसिद्धिं प्रसन्नाःसंतुपांतुमां १ इतिसंप्रार्थ्य आ-
त्मरक्षांकुर्यात् तद्यथा पूर्वेमां शंकरः पातुतथाग्नेयांच शूलधृक् कपालीदक्षिणेपातुनैरृत्येजटिलोवतु ॥ १ ॥ पश्चिमेपार्वती
नाथो वायव्येप्रमथाधिपः ॥ उत्तरेमुंडमालोव्यादीशान्येवृषभध्वजः ॥२॥ ऊर्ध्वंपातुतथाशंभुरधस्ताद्धूलिधूसरः ॥ अग्र-
तोभैरवः पातुपृष्टतः पातुखेचरः ॥ ३ ॥ दक्षिणेभूचरः पातु वामेचपिशिताशनः केशान् पातु विशालाक्षोमूर्धानंचमरुत्प्रियः ॥ ४॥
मस्तकंपातुभृग्वीशोनेत्रेपातुमहामनाः कपोलौपातुवीरेशो गंडौ गंडाभिमर्दनः ॥५॥ उत्तरोष्टेविरूपाक्षोह्यधरेयोगिनीप्रियः ॥
अक्षेषुदक्षविध्वंसीचिबुकेतुकपालधृक् ॥ ६ ॥ कंठेरक्षतुमांदेवोनीलकंठोजगद्गुरुः दक्षस्कंधे गिरींद्रेशोवामस्कंधेवसुंजयः ॥
७॥ दक्षिणेचभुजेसर्वमंत्रनाथः सदावतु वामेभुजेसार्वभौमो हृदयेपातुपांडुरः ॥८॥ दक्षस्तनेपशुपतिर्वामेपातुमहेश्वरः ॥
उदरेसर्वकल्याणकारकोवतुमांसदा ॥ ९ ॥ नाभौकामप्रविध्वंसीजंघेपातुदयामयः ॥ जानुनिपातुजामित्रोगुल्फौगौरिपतिःसदा ॥१०॥
पादपृष्टेसामनिधिस्तथापादांगुलीर्हरः पादाधः पातुसततंव्योमकेशोजगत्प्रियः ॥११ ॥ इतिरक्षामंत्रान्पठित्वापूर्वादिदिक्षुरक्षाबी-
जमंत्रान् पठन् नमस्कुर्यात् ॐ ह्रौं ह्रीं ह्रूँ ह्रः नमः पूर्वे ॥ ॐ ह्रिँ ह्रुँ ह्रौंनमः आग्नेये ॥ ॐ ह्रीँ श्रीं नमः दक्षिणे ॥
ॐ ग्लूं ह्लूं नगनगनमः नैरृत्ये ॥ ॐ ग्रूं म्रूं म्रूं संसः नमः पश्चिमे ॥ ॐ भ्रां भ्रांनमःवायव्ये ॥ ॐ भ्रांफ्रांभैरवनमः उत्तरे ॥ ॐ
ब्रंब्रूंस्रूं फट्नमः ईशान्ये ॥ ॐ ग्लौंब्लूंनमः उर्ध्वे ॥ ॐ घ्रांघ्रंघ्रः नमः अधोदेशे ॥ एवंबीजमंत्रेणरक्षांकृत्वा ॥ ततः पूर्वाद्यष्टदिक्षु
कीलाष्टकं मध्यश्मशानेचस्तंभार्थंकीलकंचनिरवाय ॥ पूजासाहित्यंमध्यस्तंभसमीपेसंस्थाप्य पूर्वाभिमुखोभैरवंप्रार्थयेत् ॐ भां

लायनम इति क्षेत्रपालमभ्यर्च्यपात्रेद्रव्यंपूरयित्वा अंकुशमुद्रयातीर्थंदत्वा दक्षांगुष्टमध्यमानामाभ्यांपूर्ववद्बलिंदद्यादनेन ॥ ॐ क्षां-
क्षींक्षूंक्षैं क्षौंक्षः स्थानक्षेत्रपालधूपदीपादिसहितंबलिंगृह्ण २ स्वाहा एषबलिःक्षेत्रपालायनमः ॥३॥ उत्तरेपूर्ववन्मंडलंकृत्वा मंड-
लंसंपूज्य ॥ गंगणेशायनमइतिगणेशमभ्यर्च्य पात्रेद्रव्य पूर्ववत्पूरयित्वा ॥ दक्षांगुष्टतर्जनीनामाभ्यांपूर्ववद्बलिंदद्यादनेन ॥ ॐ
गांगींगूंगैंगौंगः गणपतयेवरवरद सर्वजनंमेवशमानयबलिंगृह्ण २ एषबलिर्गंगणपतयेनमः ॥४॥ अथगणपतिसमीपेतथैव पूर्व
वन्मंडलंकृत्वा ॥ ॐ ह्रीं व्यापकमंडलायनम इतिगंधपुष्पाभ्यां संपूज्यसाधारणबलिंसंस्थाप्य ॥ मूलेनाभिमंत्र्यतत्र धूपदीपा-
दिभिः सर्वभूतानिसंपूज्य तत्वमुद्रयाबलिंदद्यादनेन ॐ ह्रींसर्वविघ्नकृद्भ्यः सर्वभूतेभ्योहं स्वाहा एषबलिः सर्वभूतेभ्योनमः ॥५॥
॥इतिपंचबलिः॥ **अथांतर्यागः** ॥ गुरुपात्रामृतेन गुरुपादुकापूजयेत् ॥ यथा ॥ पूर्वं शिरसित्रिकोणंकृत्वाततोदक्षहस्ते तर्जन्यं
गुष्ठाभ्यांगंधपुष्पंगृहीत्वा ॥ वामहस्ते अनामिकांगुष्ठाभ्यांशुद्धिखंडंगृहीत्वा ऊर्ध्वरेखायां ॐ ऐं ह्रीं श्रीं दिव्यौघाः श्रीपादुकांपू-
जयामितर्पयामिनमः ॥ दक्षिणरेखायां ॐ ऐं ह्रीं श्रीं सिद्धौघाः श्रीपादुकांपू० त० नमः ॥ वामरेखायां ॐ ऐं ह्रीं श्रीं मानवौघाः
श्रीपादुकांपू० त० नमः ॥ ततोगुरुपात्रामृतेनगुरुचतुष्टयंपूजयेत् ॥ ॐ ह्रींश्रीं हसक्षमलवरयूं ह्सौंहंस श्री अमुकानंदनाथगुरुश्री
पादुकांपू० त० इतित्रिः सकृद्वाएवंगुरुपरमगुरु परात्परगुरु परमेष्टिगुरुन् तर्पयेत् ॥ अथभैरवपात्रामृतेनस्वहृदि देवंतर्पयेत् ॥ यथा ॥
ॐ ह्रींबटुकाय आपदुद्धारणायकुरु २ बटुकाय ह्रीं उं श्रीमन्महाबटुकभैरवं सांगं सपरिवारं सवाहनं सायुधंपूजयामितर्पयामिनमइ-
ति ॥ ॥ **अथतत्वशुद्धिंकुर्याद्यथा** ॥ भोगपात्रोपरिहस्तंदत्वापठेत् ॥ ॐ प्राणापानव्यानोदानसमानामेशुध्यंतां ज्योतिरहं-
विरजापाप्माभूयासंस्वाहा ॥२॥ ॐ प्रकृत्यहंकारवाङ्मनः श्रोत्रापिमेशुध्यंतां ॥ ज्योतिरहं विरजाविपाप्माभूयासंस्वाहा ॥३॥
ॐ त्वक्चक्षुजिव्हाघ्राणवचांसिमेशुध्यंतां ॥ ज्योतिरहं विरजाविपाप्माभूयासंस्वाहा ॥४॥ ॐ पाणिपादपायूपस्थशब्दामे-
शुध्यंतां ॥ ज्योतिरहंविरजाविपाप्माभूयासंस्वाहा ॥५॥ ॐ स्पर्शरूपरसगंधाकाशानिमेशुध्यंतां ॥ ज्योतिरहं विरजाविपा-

सहितं द्वितीयकूटमुच्चार्य ॥ सूर्यचक्रे जालंधरगिरिपीठे षष्ठिनाथात्मके स्वप्नदशाधिष्ठायिके ज्ञानशक्त्यात्मक विष्णवात्मक शक्ति श्रीवज्रेश्वरीदेवी श्रीपादुकां पूजयामि तर्पयामि नमः श्रीलक्ष्मीनारायण सहिताय श्रीलक्ष्मीनारायण सहितात्मने कार्मिक मलशोधनार्थे हृदये सूर्यमंडले विद्यातत्वे सूक्ष्मदेहं शोधयामि जुहोमि स्वाहा ॥२॥ पुनः तृतीयवारं पात्रमादाय ॥ ॐ ह्रीं श्रीं शिवशक्ति सदाशिवेश्वर शुद्ध विद्यात्मक परं लं वं शं षं सं हं लं क्षं शुद्धाशुद्ध पंचतत्व सहितं तृतीयकूटमुच्चार्य सोमचक्रे पूर्णगिरिपीठे उड्डीशनाथात्मके सुषुप्तिदशाधिष्ठायिके क्रियाशक्त्यात्मक ब्रह्मात्मक शक्ति श्रीभगमालिनी देवी श्रीपादुकां पूजयामि तर्पयामि नमः विद्याशंकर सहिताय विद्याशंकर सहितात्मने मायिक मलशोधनार्थे चंद्रमंडले शिवतत्वेन कारणदेहं शोधयामि जुहोमि स्वाहा ॥३॥ अथ चतुर्थवारं पात्रमादाय ॥ ॐ ह्रीं श्रीं शिवशक्ति सदाशिवेश्वर शुद्धविद्या माया कला विद्या राग काल नियति पुरुष प्रकृत्यहंकार सुख श्रोत्र त्वक् चक्षु जिव्हा घ्राण वाक् पाणि पाद पायूपस्थ शब्द स्पर्श रूप रस गंधाकाश वायु तेज सलिल भूम्यात्मक ॐ आदि क्षांतं क्षादि अंतं पठेत् ॥ शुद्धाशुद्ध षट्त्रिंशत्तत्व सहितं आत्मविद्याशैवं सत्वैव स्थूल सूक्ष्म कारण महाकारण देहं शोधयामि स्वाहा समस्त मूलमुच्चार्य ॥ ब्रह्मरंध्र चक्रे उड्यानपीठं श्रीचर्यानंद नाथात्मिके तूर्यदशाधिष्ठायिके ब्रह्मात्मक शक्तिः श्रीमहाभैरव सहिताय श्रीमद्बटुक भैरवाय श्रीपादुकां पूजयामि तर्पयामि नमः ॥ गौरिवल्लक्ष्मीनारायण विद्याशंकर सहितात्मने विश्व तैजस प्राज्ञ पुरुषाय विश्व तैजस पुरुषात्मने आर्णवकार्मिक मायिक मलशोधनार्थे सर्वतत्वेन महाकारणदेहं शोधयामि स्वाहा ॥ स्वदेहपीठमंत्रांतं संपूज्य स्वहृदये पूर्वं देवं ध्यात्वा आसनाद्युपचारैः सावरणं देवमभ्यर्च्य मनसा धूप दीप नैवेद्यादीन् दत्वा मानसं वैश्वदेवं कृत्वा प्राणानायम्य ऋष्यादि कर षडंगन्यासान् कृत्वाष्टोत्तर सहस्त्रं शतं वा मूलं संपूज्य पुनः प्राणानायम्यादि कृत्वा जपं निवेद्य स्वशिरसि हृदये मूलाधारे पादयोः सर्वांगे च पंच पुष्पांजलीन् त्रीन् पुष्पांजलीन् वा दत्वा देवतायाश्चरणे आत्मानं समर्प्य बाह्यार्चनं कुर्यादिति ॥ इत्यंतर्यागः ॥ **अथ बहिर्यागः** ॥ जपस्थानार्चनस्थानं मालापुस्तक दर्शनं ॥ स्वभक्तेषु महेशानि दर्शनं नैव कारयेत् ॥१॥ इति वचनात्तद्यथोक्तं योगिनी तंत्रे ॥ लिंगस्थां पूजयेद्देवीं पुस्तकस्थां तथैव च ॥ मंडलस्थां महामायां

यंत्रस्यांप्रतिमासुच ॥२॥ जलस्थांवाशिलायांवा पूजयेत्परमेश्वरीं ॥ इतिपीठनिर्णयः ॥ शक्तिगंधाष्टकेनयंत्रंलिखेत् ॥ शक्तिगं-
धाष्टकंयथा ॥ स्वयंभुकुसुमंकुंड गोलोत्थंरोचना गुरु ॥काश्मीरमृगनाभिंचसाह्यंच मलयोद्भवं ॥ ३॥ एषगंधः समाख्यातः सर्व-
दाचंडिकाप्रियः ॥सौवर्णेराजतेताम्रेपट्टे भूर्जेथवाभुवि ॥ विनायंत्रेणचेत्पूजादेवतानप्रसीदति ॥५॥ स्वपुरोपीठेयंत्रंस्थापयेत् ॥
भूप्रदेशेमनोरम्येपुष्पामोदसुधूपिते ॥ गोमयेनाथसंलिप्ते पुष्पप्राकारशोभिते ॥६॥ मंडपंविधिवत्तत्र आसनंतुसमर्पयेत् ॥ लिखेद्यं-
त्रंप्रयत्नेनलेखन्याहेमतारयोः ॥७॥ अथयंत्रोद्धारः॥ यंत्रोद्धारमिमंदेवीत्रैलोक्येचातिदुर्लभं ॥ तद्यंत्रंचप्रवक्ष्यामियत्रेदेवंचपूजयेत्
॥१॥ मध्येचाष्टदलंपद्मकर्णिकाकेसरोज्वलं ॥ त्रिकोणंचततः कृत्वाषट्कोणंचततोन्यसेत् ॥२॥ वर्त्तुलंचाष्टपत्रंचचतुरस्रंत्रयात्मकं ॥
एवंयंत्रंचसंपूज्यस्वस्थो भूत्वाजपेन्नरः ॥३॥ इतियंत्रोद्धारः ॥ अथपीठावरणदेवतान्यासः ॥ ॐ मं मंडूकायनमः आधारे
ॐ कालाग्निरुद्रायनमः स्वाधिष्ठाने ॐ कुंकूर्मायनमः नाभौ ॐ आं आधारशक्तयेनमः ॐ क्षींक्षीरसागराय॰ ॐ रं रत्नभूता-
य॰ ॐ रंरत्नद्वीपायनमः ॐ कं कल्पवृक्षाय॰ ॐ रं रत्नवेदिकाय॰ हृदये ॐ धं धर्माय॰ दक्षांसे ॐ ज्ञां ज्ञानाय॰ वामांसे ॐ
वं वैराग्याय॰ वामोरौ ॐ ऐं ऐश्वर्याय॰ दक्षोरौ ॐ अं अधर्माय॰ वदने ॐ अं अज्ञानाय॰ वामपार्श्वे ॐ अं अवैराग्याय॰ ना-
भौ ॐ अं अनैश्वर्याय॰ दक्षपार्श्वे ॐ आं आनंदाय॰ ॐ कं कंकाय॰ ॐ संसंविन्ना॰ ॐ संसरोजाय॰ ॐ पंप्रकृतिपत्रेभ्यो॰
ॐ विं विकारमयकेसरेभ्यो॰ ॐ पंचाशद्वर्णाढ्यकर्णिकायै॰ ॐ अंअर्कमंडलायद्वादशकलेभ्योनमः ॐ चंद्रमंडलायषोडश
कलात्मनेनमः ॐ अग्निमंडलायद्वादशकलेभ्यो॰ ॐ संसत्वबोधात्मने॰ ॐ रंरजः प्रकृतात्मने॰ ॐ तंतमस्तुमोहात्मने॰ ॐ आंआ-
त्मने॰ ॐ पंपरमात्मने॰ ॐअंअंतरात्मने॰ ॐ ज्ञांज्ञानात्मने॰ ॐ मांमायातत्वात्मने॰ ॐ कंकलातत्वात्मने॰ ॐ विं विद्यातत्वात्मने॰
ॐ पंपरतत्वात्मने॰ पीठनवशक्तिन्यसेत् ॥ ॐ तंतत्पुरुषायनमः ॐ ईंईशानायनमः ॐ अं अघोराय॰ ॐ वांवामदेवाय॰ ॐसं
सद्योजाताय॰ ॐ वांवामायै॰ ॐ ज्येंज्येष्ठायै॰ ॐ श्रें श्रेष्ठायै॰ ॐ रौं रौद्राय॰ ॐ कां कालायै॰ ॐ कंकलविकरणायै॰ ॐबं

बलविकरणायै॰ ॐ बं बलप्रमथनायै॰ ॐ मं मनोन्मनायै॰ हृदये अथावरणदेवतान्यासः तत्रशिरसि ॐ हृं हृदयेदेवाय॰ ॐ कं क॰
वचदेवाय॰ ॐ नें नेत्रदेवाय॰ ॐ अं अस्त्रदेवाय॰ इतिप्रथमावरणदेवतान्यासः ॥ अथललाटे ॐ डां डाकिनीपुत्रेभ्यो नमः ॐ
शां शाकिनीपुत्रेभ्योनमः ॐ लां लाकिनी पुत्रेभ्योनमः ॐ कां काकिनी पुत्रेभ्योनमः ॐ सां साकिनी पुत्रेभ्योनमः ॐ हां हाकिनीपुत्रे
भ्योनमः ॐ मां मालिनी पुत्रेभ्यो॰ ॐ दें देवि पुत्रेभ्यो॰ ॐ आं मातृ पुत्रेभ्यो॰ ॐ रुं रुद्र पुत्रेभ्यो॰ ॐ मां मातृ पुत्रेभ्यो॰ ॐ उं ऊर्ध्व
मुखपुत्रेभ्यो॰ ॐ अं अधोमुखपुत्रेभ्यो नमः इतिद्वितीयावरणदेवतान्यासः ॥ अथकंठे ॥ ॐ ब्रं ब्रह्माणीपुत्र बटुकायनमः ॐ मां-
माहेश्वरीपुत्रबटुकायनमः ॐ कौं कौमारी पुत्रबटुकायनमः ॐ वैं वैष्णावीपुत्रबटुकायनमः पूर्वेशानयोर्मध्येब्रह्माणी नैऋतिवरुणयोर्म-
ध्ये वैष्णावी ॐ इं इंद्राणीपुत्रबटुकायनमः ॐ मं महालक्ष्मीपुत्रबटुकायनमः ॐ वां वाराही पुत्रबटुकाय॰ ॐ चां चामुंडा पुत्रबटुकायनमः
इतितृतीयावरणदेवतान्यासः ॥ अथहृदये ॥ ॐ हें हेतुकाय॰ ॐ त्रिं त्रिपुरांतकायनमः ॐ वें वेतालायनमः ॐ अं अग्निजिह्वायनमः
ॐ कां कालांतकायनमः ॐ कं करालायनमः ॐ एं एयालायनमः ॐ त्रीं त्रीमायनमः ॐ अं अचलायनमः ॐ हां हाटकेशाय॰ इति
चतुर्थावरणदेवतान्यासः ॥ अथनाभौ ॐ श्रीं श्रीकंठायनमः ॐ अं अनंतेशाय॰ ॐ सूं सूक्ष्मेशाय॰ ॐ अं अर्मीशाय॰ ॐ भां भार
भूतीशाय॰ ॐ अं अतिर्थीशाय॰ ॐ स्थां स्थाण्वीशाय॰ ॐ हं हरेशाय॰ ॐ झिं झिंटीशाय॰ ॐ भौं भौतिकेशाय॰ ॐ सं सद्यो
जातेशाय॰ ॐ अं अनुगृहेशाय॰ ॐ क्रूं क्रूरेशाय॰ ॐ मं महासेनेशायनमः इतिपंचमावरणदेवतान्यासः ॥ अथस्वाधिष्ठाने ॐ
क्रों क्रोधीशायनमः ॐ चं चंडीशाय॰ ॐ पं पंचांतकेशाय॰ ॐ शिं शिवोत्तमेशाय॰ ॐ एं एकरुद्रेशाय॰ ॐ कूं कूर्मेशाय॰ ॐ एं
एकनेत्रेशाय॰ ॐ चं चतुराननेशाय॰ ॐ अं अजेशाय॰ ॐ सं सर्वेशाय॰ ॐ सों सोमेशाय॰ ॐ लां लांगलीशाय॰ ॐ दां दारु-
केशाय॰ ॐ अं अर्धनारीशाय॰ ॐ उं उमाकांतशाय॰ आं आषाढीशाय॰ इतिषष्टा वरणदेवतान्यासः ॥ अथमूलाधारे ॐ दं दं-
डीशाय॰ ॐ अं अत्रीशाय॰ ॐ मं मीनेशाय॰ ॐ मं मेघेशाय॰ ॐ लों लोहितेशायनमः ॐ शिं शिखीशाय॰ ॐ छं छगलंडेशाय॰ ॐ

डिंडिंडिरंडेशाय० ॐ मां माहाकालीशाय० ॐ बांबालीशाय० ॐ भुंभुजंगेशाय० ॐ पिंपिनाकीशाय० ॐ खंखड्गीशाय० ॐ बंबकी-
शाय० ॐ श्वेंश्वेतेशाय० ॐ भृंभृग्वीशाय० देवस्यवामे ॐ नंनकुलीशाय० ॐ शिंशिवेशाय० ॐ संसंवर्त्तकेशाय० ॐ दिंदिव्ययो-
गिन्यै० ॐ अं अंतरिक्षयोगिन्यै० ॐ भूंभूमिष्टयोगिन्यै० ॐ संसंवर्त्तयोगिन्यैनमः इतिसप्तमावर्णदेवतान्यासः ॥ अथपादयोः ॥
ॐ वंवज्रसहितइंद्रायनमः ॐ शंशक्तिसहितअग्नयेनमः ॐ दंदंडसहितयमायनमः ॐ खंखड्गसहितक्षं निऋतयेनमः ॐ पांपाश
स० वंवरुणायनमः ॐ अं अंकुश सहित० यं वायवेनमः ॐ गंगदासहितसंसोमाय० ॐ त्रिंत्रिशूलस० इं ईशानाय० ॐ कंकमलासहि
त ब्रंब्रह्मणेनमः ॐ चंचक्रसहित अ नंतायनमः ॥ इति अष्टमावरणदेवतान्यासः ॥ अथ पीठपूजा ॥ ॐ ह्रीं आधारासनायनमः
॥ ॐ मंडुकायनमः ॥ ॐ कालाग्निरुद्राय० ॥ ॐ कूर्माय० ॥ ॐ अनंताय० ॥ ॐ पृथिव्यै० ॥ ॐ सुधांबुध्यै० ॥ ॐ रत्नद्वीपाय० ॥
ॐ मणिमंडपाय० ॐ कल्पवृक्षाय० ॐ रत्नवेदिकायै० ॐ धर्माय० ॐ ज्ञानाय० ॐ वैराग्यायनमः ॐ ऐश्वर्याय० ॐ आनंदकंदा-
यनमः ॐ सविन्नालाय० ॐ सर्वतत्वाय० ॐ पद्माय० ॐ प्रकृतिमयपत्राय० ॐ विकृतिमयकेशरेभ्यो० ॐ पंचाशद्वर्णबीजाढ्या
कर्णिकायै० ॐ अं अर्कमंडलाय० ॐ सोम मंडलाय० ॐ वन्हिमंडलाय० ॐ संसत्वाय० ॐ रंरजसे० ॐ तंतमसे ॐ आंआत्म-
ने ॐ पंपरमात्मने ॐ ह्रींज्ञानात्मने० ॐ मांमायातत्वाय० ॐ विंविद्यातत्वाय० ॐ शिंशिवतत्वाय ॐ पंपरतत्वाय० ॐ माया-
यै० ॐ ज्येष्ठायै० ॐ रौद्र्यै० ॐ काल्यै० ॐ कलविकरण्यै० ॐ बलविकरण्यै० ॐ बलप्रमथिन्यै० ॐ सर्वभूतदमन्यै० ॐ मध्ये
मनोन्मन्यै० ॐ नमोभगवतेसकलगुणात्मशक्तियुक्ताय अनंताय योगपीठात्मने नमः एवंगंधपुष्पाभ्यांपीठंसंपूज्य ॥ ॥
अथस्वत्हृदयस्थंदेवंयंत्रेस्थापयेत्तद्यथा ॥ यंत्रस्यासनोपरिमूलेनमूर्त्तिविचिंत्य आत्मानंकामकलारूपंविभाव्य । कूर्ममुद्र-
या पुष्पं गृहीत्वा वामनासापुटे वायुबीजेन मूलाधारात्कुंडलिनींब्रह्मरंध्रांतंनीत्वा हृदयेसमानीयमूले मूर्त्तिंकल्पयेत् ॥ कुंडलिनीमूर्त्तिसं-
योगंविभाव्यतन्मूर्त्तिंदक्षनासया पुष्पमारोप्यतत्पुष्पंचक्रेनिधापयेत् ॥ तदुक्तं कुमारीकल्पे ॥ ततो हृदयपद्मांतंस्फुरंतींविद्युदाकृतिं

सुषुम्णावर्त्मनानीत्वाशिवस्थाने महेश्वरी ततोवैहृदयासन्नेपुष्पांतरेसमुन्नयेत् ॥१॥ यंत्रमध्ये आवाहयेदनेन देवेशभक्तिसुलभपरि-
वारसमन्वित ॥ यावत्त्वांपूजयिष्यामितावद्देवइहावह ॥१॥ ॐ सद्योजातमिति आवाहनादि मुद्रांप्रदर्श्यावाहयेत् इहागच्छ २ इति
आवाहनीभवेति आवाह्य वामदेवायेतिमंत्रेण मूलेनस्थापनी मुद्रयास्थापनीभवेतिसंस्थाप्य सन्निधापनमुद्रयाइहसन्निधेहीतिसन्निधा
निभवेतिसन्निधाप्य सन्निरोधनमुद्रयाइहसन्निरुद्ध २ इतिसन्निरोधिनीभवेतिसन्निरोध्य सन्मुखीकरणमुद्रयासन्मुखोभव २ इति स-
न्मुखीकृत्वा षडंगेनसंकलीकृत्य हुमित्यवगुंठ्यछोटिकाभिर्दशदिग्बंधनंकृत्वा वमितिधेनुमुद्रयाऽमृतीकृत्य महामुद्रयापरमीकृत्य ले-
लिहामुद्रयाजीवन्यासंविधाय खड्गमुंडवराभययोनिमुद्रांप्रदर्शयेत् स्वागतंकुशलमिदमासनमास्यतां इत्यभिलाप्य यंत्रे प्राणप्र-
तिष्ठांकुर्यात् ॥ ॐ आं ह्रीं क्रों यंरंलंवं शंषंसंहंसः सोहं बटुक भैरवाय सपीठयंत्रसहितायपरिवारायप्राणाइहप्राणाः सुखंचिरं
तिष्ठंतुस्वाहा ॥ पुनः १४ सर्वेंद्रियाणिस्थितानि पुनः १४ जीवइहास्थितः सुखंचि॰ पुनः १४ वाङ्मनत्वक् चक्षुश्रोत्र जिव्हाघ्राणानि
सुखंचिरंतिष्ठंतुस्वाहा यः प्राणतोनिमिषतोमहित्वेविधेमइतिमन्त्रिति त्रिवारं पठेत् ॥ मनोजूतिर्जूषतासुप्रतिष्ठाप्रतिष्ठा ॥ इति प्रा-
णप्रतिष्ठा ॥ अथध्यानं ॥ शुद्धस्फटिकसंकाशंसहस्रादित्यवर्चसं ॥ नीलजीमूतसंकाशंनीलांजनसमप्रभं ॥१॥ अष्टबाहुंत्रिनयनंच
तुर्बाहुंद्विबाहुकं ॥ दंष्ट्राकरालवदनंनूपुरारावसंकुलं ॥२॥ भुजंगमेखलंदेवमग्निवर्णशिरोरुहं ॥ दिगंबरंकुमारेशंबटुकाख्यंमहाबलं
॥३॥ खड्गांगमसिपाशंचशूलंदक्षिणभागतः ॥ डमरुंचकपालंचवरदंभुजगंतथा ॥४॥ अग्निवर्णसमोपेतंसारमेयसमन्वितं ॥ ध्या-
त्वाजपेत्सुसंहृष्टः सर्वान्कामानवाप्नुयात् ॥५॥ अथसात्विकंवंदे बालमिति ॥६॥ अथराजसंउद्यद्भास्करसन्निभमिति ॥७॥
अथतामसंध्यायेन्निलाद्रिकांतमिति ॥८॥ इतियथाकामनया ध्यात्वा ॥ ॐ ह्रींबटुकाय आपदुद्धारणायकुरु २ बटुकाय ह्रीं ॐ
श्रीमद्बटुकभैरवायनमः एवंसर्वत्र आवाहनंस॰ ॥ मूलेनासनंस॰ ॥ मूलेनसामान्यार्घोदकेनपादयोः पाद्यंस॰ ॥ मू॰ विशेषार्घंस॰
मू॰ एषमधुपर्कोनमइतिमुखेदत्वा ॥ ततो मू॰ आचमनंस॰ । मू॰ शंखोदकेनस्नानंस॰ पयः पृथिव्यामितिमू॰ पयः स्नानंस॰ दधिक्रा॰मू॰

दधिस्नानंस० घृतं० मू० घृतस्नानं । मधुवाता० मू० मधुस्नानंस० । अपा ९० रस० मू० शर्करास्नानं० । शुद्धवालः० मू०सां-
बकलशाच्छुद्धोदकस्नानं० मू० गंगादितीर्थोदकेन स्नानं० ततः संक्षेपतः गंधपुष्पधूपदीपनैवेद्यंदत्वानिर्माल्यंविसृज्य अछिन्नधारया-
पुरुषसूक्तेनरुद्रसूक्तेनवा अभिषेकं कुर्यात् मू० युवासु० वस्त्रं० मू० आभूषणंस० यज्ञोपवि० मू० यज्ञोपवितंस० गंधद्वारा० मू० गं-
धंस० अक्षन्नमी० मू० अक्षताः स० यत्पुरुषेतिमू० पुष्पंसः एवंपुष्पांतंपूजयित्वात् तो आवर्णपूजांकृत्वाधूपदीपादिपूजांकुर्यात् ॥
अथावर्णपूजा ॥ पुष्पांजलिंसमादायसंविन्मयेपरोदेवपरामृतरसप्रिय ॥ अनुतांदेहिबटुकपरिवारार्चनायमे ॥१॥ इत्युक्ता
पुष्पांजलिंभैरवोपरिदत्वा आज्ञांगृहीत्वा भैरवमेवपरिवाररूपेणपरिणतां ध्यात्वा परिवारदेवतांध्यायेत् ॥ अत्रसर्वत्र पूज्यपूजक-
योरंतरालप्राचीतदनुसारेण अन्याः दिशः प्रकल्प्यपूजयेत् ॥ ततोदक्षहस्तेतर्जन्यंगुष्ठाभ्यांगंधाक्षतपुष्पाणिगृहीत्वा वामहस्ते अना
मांगुष्ठाभ्यांशुद्धिमीनखंडंगृहीत्वा मध्येत्रिकोणेदेवस्याग्रे ॐ ह्रः बः ईशानाय अंगुष्ठाभ्यां अंगुष्ठः श्रीपादुकांपूजयामितर्पयामि
नमः ॐ ह्रौंबौं तत्पुरुषायतर्जनीतर्जनीश्रीपादुकांपू० त० ॐ ह्रैं बैं अघोरायमध्यमायमध्यमायश्रीपादुकांपू० त० ॐ ह्रूं बूं वा-
मदेवाय अनामिकाय अनामिकाश्रीपादुकापू० त० ॐ ह्रींबींसद्योजातायकनिष्ठिकाकनिष्ठः श्रीपादुकांपू० त० ॐ ह्रांबां पंचवक्राय
महादेवायकरतलकरपृष्ठाभ्यां करतलकरपृष्ठाः श्रीपादुकांपू० त० ॐ ह्रौंबौं ईशानायशिरसेस्वाहाशिरसि श्रीपादुकांपू० त० ॐ
ह्रैं बैं तत्पुरुषाय ऊर्ध्ववक्त्राय मुखे मुखं श्रीपादुकांपू० त० ॥ ॐ ह्रूं बूं अघोरायदक्षिणवक्त्रायदक्षिणकर्णेदक्षिणकर्णः श्रीपादुका पू० त० ॥
ॐ ह्रींबींवामदेवायउत्तरवक्त्रायवामकर्णेवामकर्णः श्रीपादुकांपू० त० ॥ ॐ ह्रांबांसद्योजातायपश्चिमवक्त्रायचूडाघः चूडाघः श्रीपादुकां-
पू० त० ॥ अथदेवस्यांगे ॥ एवंषडंगं ॥ ॐ ह्रांबांहृदयाय हृदयः श्रीपादुकांपू० त० ॥ ॐ ह्रींबींशिरसेस्वाहा शिरसिश्री पादुकांपू०
त० ॥ ॐ ह्रूंबूं शिखायैवषट् शिखाः श्रीपादुकांपू० त० ॥ ॐ ह्रैं बैंकवचायहुंकवचः श्रीपादुकांपू० त० ॥ ॐ ह्रौंबौं नेत्रत्रयायवौषट् नेत्र-
त्रयंश्रीपादुकांपू० त० ॥ ॐ ह्रः बः अस्त्रायफट् अस्त्र श्रीपादुकांपू० त० ॥ ॐ ह्रः बः पातालेपातालं श्रीपादुकांपू० त० ॥ ॐ ह्रौंबौं ऊर्ध्वे-

ऊर्ध्वंश्रीपादुकांपू॰ त॰ ॥ ॐ ह्रैं बैं पूर्वेपूर्वं श्रीपादुकांपू॰ त॰ ॥ ॐ ह्रूं बूं दक्षिणे दक्षिणं श्री पादुकांपू॰ त॰ ॥ ॐ ह्रीं बीं पश्चिमे पश्चिमं श्री पादुकां
पू॰ त॰ ॥ ॐ ह्रांबांउत्तरेउत्तरंश्रीपादुकांपू॰ त॰ ॥ ॐ ह्रींबटुकाय आपदुद्धारणाय कुरु २ बटुकायह्रीं ॐ बटुकाय श्री बटुकं श्रीपादुकांपू॰ त॰
॥ पुष्पांजलिमादाय मूलमुच्चार्य। अभीष्टसिद्धिंमेदेहि शरणागतवत्सल ॥ भक्त्यासमर्पयेत्तुभ्यंप्रथमावरणार्चनं ॥१॥ इतिपुष्पांजलिं
दत्वाविशेषार्घ्याद्बिंदुं निक्षिप्य पूजितास्तर्पिताः संतु ॥ ततोस्तंभनं १ चतुस्त्राणि २ मच्छ ३ गोसु ४ योनिमुद्रेतिपंचमुद्रांप्रदर्श्यनमस्कृत्य
॥ इतिप्रथमावरणं ॥१॥ अथद्वितीयावरणं ॥ कर्णिकाद्बहिः अष्टदले पूर्वादिक्रमेण ॥ ॐ ह्रीं असितांगभैरवाय असितांगभैरवश्री
पादुकांपू॰ त॰ ॥ ॐ ह्रीं ईं रुरुभैरवायरुरुभैरवश्रीपादुकांपू॰ त॰ ॥ ॐ ह्रीं ऊं चंडभैरवायचंडभैरवश्रीपादुकांपू॰ त॰ ॥ ॐ ह्रीं ऋं क्रोध
भैरवायक्रोधभैरव श्रीपादुकांपू॰ त॰ ॥ ॐ ह्रीं ऌं उन्मत्तभैरवायउन्मत्तभैरवश्रीपादुकांपू॰ त॰ ॥ ॐ ह्रीं ऐं कपाल भैरवायकपालभैरवश्री
पादुकांपू॰ त॰ ॥ ॐ ह्रीं ओं भीषणभैरवाय भीषणभैरवश्रीपा॰ पू॰ त॰ ॥ ॐ ह्रीं अं संहार भैरवाय संहारभैरव श्री पा॰ पू॰ त॰ ॥ त्रिकोणकोणेषु
सत्वरजस्तमान् प्रादक्षिण्येन केचित्पूजयंति ॥ पुनः मूलेन पुष्पांजलिंगृहीत्वा ॥ अभिष्ट॰ ॥१॥ इत्युक्त्वा पुष्पांजलिंदत्वाविशेषार्घ बिंदुं भैर-
वोपरिदत्वापूजितास्तर्पिताः संतु ॥ पूर्ववन्मुद्रा प्रदर्श्येतिद्वितीयावरणं ॥ अथतृतीयावरणं ॥ त्रिकोणाद्बहिः षट्कोणे ॥ ॐ ह्रीं भू-
तनाथायनमइतिसर्वत्रभूतनाथश्रीपा॰ पू॰ त॰ ॥ ॐ ह्रीं आदिनाथाय आदिनाथश्रीपा॰ पू॰ त॰ ॥ ॐ ह्रीं आनंदनाथाय आनंदनाथश्री
पा॰ पू॰ त॰ ॥ ॐ ह्रीं सिद्धशाबरनाथायसिद्धशाबरनाथश्रीपा॰ पू॰ त॰ ॥ ॐ सहजानंदनाथायसहजानंदनाथश्रीपा॰ पू॰ त॰ ॥ ॐ ह्रीं निः
सीमानंदनाथायनिःसीमानंदनाथश्रीपा॰ पू॰ त॰ ॥ अथवाषट्कोणे आग्नेयादिक्रमेण ॐ ह्रांबां हृदयायनमः ॐ ह्रींबीं शिरसेस्वाहा ह्रूंबूं
शिखायैवषट्नमः ॐ ह्रैंबैं कवचायहुंनमः ॐ ह्रौंबौं नेत्रत्रयायवौषट्नमः ॐ ह्रः बः अस्त्रायफट्नमः इतिप्रकारांतरं शारदोक्तम्
पुनर्पुर्ववन्मूलेनपुष्पांजलिमादाय ॥ अभिष्टसिद्धिंमेदेहिशरणागतवत्सल ॥ भक्त्यासमर्पयेत्तुभ्यंतृतीयावरणार्चनं ॥१॥ इत्युक्त्वापुष्पां-
जलिंदत्वाविशेषार्घबिंदुं भैरवोपरिदत्वापूजितास्तर्पिताः संतुस्तंभनादिपंचमुद्रांप्रदर्श्येति तृतीयावरणं ॥३॥ अथचतुर्थावरणं ॥ वर्तु-

लेपूर्वादिक्रमेण ॥ ॐ ह्रीं डाकिनीपुत्रेभ्योनमः डाकिनीपुत्रश्रीपा० पू० त० ॥ ॐ ह्रीं राकिनीपुत्रेभ्योनमः राकिनीपुत्रश्रीपा० पू० त० ॥ ॐ ह्रीं ला-
किनीपुत्रश्रीपा० पू० त० ॥ ॐ ह्रीं काकिनीपुत्रेभ्योनमः काकिनीपुत्रश्रीपा० पू० त० ॥ ॐ ह्रीं शाकिनीपुत्रेभ्योनमः शाकिनीपुत्रश्री० पा० पू० त० ॥
ॐ ह्रीं हाकिनीपुत्रेभ्योनमः हाकिनीपुत्रश्रीपा० पू० त० ॥ ॐ ह्रीं याकिनीपुत्रेभ्योनमः याकिनीपुत्रश्रीपा० पू० त० ॥ ॐ ह्रीं देवीपुत्रेभ्योनमः
देवीपुत्रश्रीपा० पू० त० ॥ इत्यष्टदिक्षुसंपूज्यततोदेवस्यदक्षभागे ॥ ॐ ह्रीं उमापुत्रेभ्योनमः उमापुत्रश्रीपा० पू० त० ॥ ॐ ह्रीं रुद्रपुत्रेभ्योनमः
रुद्रपुत्रश्रीपा० पू० त० ॥ ॐ ह्रीं मातृपुत्रेभ्योनमः मातृपुत्रश्रीपा० पू० त० ॥ ततोपूर्वेशानयोर्मध्ये ॥ ॐ ह्रीं ऊर्ध्वमुखीपुत्रेभ्योनमः ऊर्ध्व-
मुखीपुत्रश्रीपा० पू० त० ॥ पश्चिमनैर्ऋतयोर्मध्ये ॥ ॐ ह्रीं अधोमुखीपुत्रेभ्योनमः अधोमुखीपुत्रश्रीपा० पू० त० ॥ पुनर्मूलेन पुष्पां-
जलिंगृहीत्वा ॥ अभिष्टसिद्धिंमेदेहिशरणागतवत्सल ॥ भक्त्यासमर्पयेतुभ्यंचतुर्थावरणार्चनं ॥ १ ॥ इत्युक्त्वापुष्पांजलिंदत्वाविशेषा
र्घाद्बिंदुंभैरवोपरिदत्वापूजितास्तर्पिताःसंतु ॥ पूर्ववत्पंचमुद्राःप्रदर्श्येतिचतुर्थावरणं ॥ ४ ॥ अथपंचमावरणं ॥ वर्तुलाद्बहिः अष्टदलाग्रे
पूर्वादि अभ्यंतंक्रमेण ॥ पूर्वे ॐ ह्रीं ब्रह्मापिपुत्रबटुकायनमः बटुकश्रीपा० पू० त० ॥ ईशान्ये ॐ ह्रीं माहेश्वरीपुत्रबटुकायनमः बटुकश्री
पा० पू० त० ॥ उत्तरे ॐ ह्रीं वैष्णवीपुत्रबटुकायबटुकश्रीपा० पू० त० ॥ वायव्ये ॐ ह्रीं कौमारीपुत्रबटुकायबटुकश्रीपा० पू० त० ॥ पश्चिमे
ॐ ह्रीं इंद्राणीपुत्रबटुकायनमः बटुकश्रीपा० पू० त० ॥ नैर्ऋत्ये ॐ महालक्ष्मीपुत्रबटुकायबटुकश्रीपा० पू० त० ॥ दक्षिणे ॐ ह्रीं वाराही
पुत्रबटुकायबटुकश्रीपा० पू० त० ॥ आग्नेये ॐ ह्रीं चामुंडापुत्रबटुकायबटुकश्रीपा० पू० त० ॥ पुनर्मूलेनपुष्पांजलिंगृहीत्वा ॥ अभिष्ट०
॥ १ ॥ इत्युक्त्वापुष्पांजलिंदत्वाविशेषार्घबिंदुंभैरवोपरिदत्वापूजितास्तर्पिताः संतुपूर्ववन्मुद्राप्रदर्श्येतिपंचमावरणं ॥ ५ ॥ अथषष्ठावरणं
॥ अष्टदलाद्बहिः चतुरस्राभ्यंतरेपूर्वादिप्राग्दक्षिण्येनदशदिक्षु हेतुकादीन्दशबटुकान्यजेत्तथा ॥ ॐ ह्रीं हेतुकायनमः हेतुकश्रीपा०
पू० त० ॥ ॐ ह्रीं त्रिपुरांतकायत्रिपुरांतकश्रीपा० पू० त० ॥ ॐ ह्रीं वेतालायवेतालश्रीपा० पू० त० ॥ ॐ अग्निजिव्हायअग्निजिव्हश्रीपा०
पू० त० ॥ ॐ ह्रीं कालांतकायकालांतकश्रीपा० पू० त० ॥ ॐ ह्रीं करालायकरालश्रीपा० पू० त० ॥ ॐ ह्रीं एकपादायएकपादश्रीपा० पू० त०

॥ ॐ ह्रींभीमरूपायभीमरूपश्रीपा॰पू॰त॰ ॥ इंद्रेशानयोर्मध्ये ॐ ह्रीं अचलाय अचलश्रीपा॰पू॰त ॥नैऋतिवरुणयोर्मध्ये ॐ ह्रीं हाटके-
शायहाटकेशश्रीपा॰पू॰त॰ ॥१०॥ पुष्पांजलिमादायमूलमुच्चार्य ॥ अभीष्ट॰ ॥१॥ विशेषार्घ्यबिंदुभैरवोपरि दद्यात् पूजितास्तर्पिताः संतु॥
पूर्ववन्मुद्रांप्रदर्श्येतिषष्ठावरणं ॥६॥ अथसप्तमावरणं ॥ तत्रत्रिरेखात्मक भूपुरस्य प्रथमरेखायांदिग्विदिगंतरालेषु षोडशस्थानेषुश्रीकंठा-
दिमहासेनांतान्यजेत् ॥ तत्रदिक्षु ॥ पूर्वे ॐ ह्रीं अंश्रीकंठेशपूर्णोदरीभ्यांनमः श्रीकंठेशपूर्णोदरीश्रीपा॰पू॰त॰ ॥१॥ दक्षिणे ॐ ह्रीं आं अ-
नंतेशविरजाभ्यांनमः अनंतेशविरजश्रीपा॰पू॰त॰ ॥२॥ पश्चिमे ॐ ह्रीं इं सूक्ष्मेशशाल्मलीभ्यांनमः सूक्ष्मेशशाल्मलीश्रीपा॰पू॰त॰ ॥३
॥ उत्तरे ॐ ह्रीं ईं त्रिमूर्त्तीशलोलाक्षीभ्यांनमः त्रिमूर्त्तीशलोलाक्षीश्रीपा॰पू॰त॰ ॥४॥ आग्नेय्यां ॐ ह्रींउं अमरेशवर्त्तुलाक्षीभ्यांनमः
अमरेशवर्त्तुलाश्रीपा॰पू॰त॰ ॥५॥ निर्ऋते ॐ ह्रींऊं अर्घीशदीर्घघोणाभ्यांनमः अर्घीशदीर्घघोणाश्रीपा॰पू॰त॰ ॥६॥ वायव्ये ॐ
ह्रींऋं भारभूतीशदीर्घमुखीभ्यांनमः भारभूतीशदीर्घमुखीश्रीपा॰पू॰त॰ ॥७॥ ईशान्ये ॐ ह्रींॠं अतिथीशगोमुखीभ्यांनमः अ-
तिथीशगोमुखीश्रीपा॰पू॰त॰ ॥८॥ पूर्वाग्निमध्ये ॐ ह्रींऌं स्थाण्वीशदीर्घजिव्हाभ्यांनमः स्थाण्वीशदीर्घजिव्हश्रीपा॰पू॰त॰ ॥९॥
दक्षिणनैऋतमध्ये ॐ ह्रींॡं हरेशकुंडोदरीभ्यांनमः हरेशकुंडोदरीश्रीपा॰पू॰त॰ ॥१०॥ पश्चिमवायुमध्ये ॐ ह्रीं एं झिंटीशोर्ध्वकेशी
भ्यांनमः झिंटिशोर्ध्वकेशीश्रीपा॰पू॰त॰ ॥११॥ उत्तरेशानमध्ये ॐ ह्रींऐं भौतिकेशविकृतमुखीभ्यांनमः भौतिकेशविकृतमुखीश्री
पा॰पू॰त॰ ॥१२॥ अग्निदक्षिणमध्ये ॐ ह्रीं ओंसद्योजातेशज्वालामुखीभ्यांनमः सद्योजातेशज्वालामुखीश्रीपा॰पू॰त॰ ॥१३ ॥ निऋति
वरुणमध्ये ॐ ह्रीं औंअनुग्रहेशोल्कामुखीभ्यांनमः अनुग्रहेशोल्कामुखीश्रीपा॰पू॰त॰ ॥१४॥ वायुसोममध्ये ॐ ह्रींअं अक्रूरेशश्री
मुखीभ्यांनमः अक्रूरेशश्रीमुखीश्रीपा॰पू॰त॰ ॥१५॥ ईशानपूर्वमध्ये ॐ ह्रीं अः महासेनेशविद्यामुखीभ्यांनमः महासेनेशविद्यामुखी
श्रीपा॰पू॰त॰ ॥१६॥ पुष्पांजलिमादायमूलमुच्चार्य अभीष्टसिद्धिंमे॰ ॥१॥ विशेषार्घबिंदु भैरवोपरि दद्यातपूजितास्तर्पिताः संतु ॥
पूर्ववन्मुद्रांप्रदर्श्येतिसप्तमावरणं ॥७॥ अथाष्टमावरणं ॥ भूपुरस्यद्वितीयरेखायांदिग्विदिगंतरालेषु षोडशस्थानेषुक्रोधीश्वरा-

द्याषोडशांतान् पूजयेत् ॥ तत्रपूर्वे ॐ ह्रींकं क्रोधीशमहाकालीभ्यांनमः क्रोधीशमहाकालीश्रीपा०पू०त० ॥१॥ दक्षिणे ॐ ह्रींखं चंडीश
सरस्वतीभ्यांनमः चंडीशसरस्वतीश्रीपा०पू०त० ॥२॥ पश्चिमे ॐ ह्रींगं पंचांतकेशसर्वसिद्धिगौरिभ्यांनमः पचांतकेशसर्वसिद्धिगौ-
रीश्रीपा०पू०त० ॥३॥ उत्तरे ॐ ह्रीं घं शिवोत्तमेशत्रैलोक्यविजयाभ्यांनमः शिवोत्तमेशत्रैलोक्यविजयाश्रीपा०पू०त० ॥४॥ आग्नेय्यां
ॐ ह्रींङं एकरुद्रेशमंत्रशक्तिभ्यांनमः एकरुद्रेशमंत्रशक्तिश्रीपा०पू०त० ॥५॥ नैरृत्ये ॐ ह्रींचं कूर्मेशात्मकशक्तिभ्यांनमः कूर्मेशात्म
शक्तिश्रीपा०पू०त० ॥६॥ वायव्ये ॐ ह्रीं छं एकनेत्रेशभूतमातृकाभ्यांनमः एकनेत्रेशभूतमातृकाश्रीपा०पू०त० ॥७॥ ईशान्ये ॐ ह्रीं
जं चतुराननेशलंबोदरीभ्यांनमः चतुराननेशलंबोदरीश्रीपा०पू०त० ॥८॥ पूर्वाग्निमध्ये ॐ ह्रींझं अजेशद्राविणीभ्यांनमः अजेशद्राविणीश्री
पा०पू०त० ॥९॥ दक्षिणनैरृतमध्ये ॐ ह्रींञं सर्वेशनागरीभ्यांनमः सर्वेशनागरीश्रीपा०पू०त० ॥१०॥ पश्चिमवायुमध्ये ॐ ह्रींटं सोमे
शखेचरीभ्यांनमः सोमेशखेचरीश्रीपा०पू०त० ॥११॥ उत्तरेशानमध्ये ॐ ह्रींठं लांगलीशमंजरीभ्यांनमः लांगलीशमंजरीश्रीपा०पू०त०
॥१२॥ अग्नियाम्यमध्ये ॐ ह्रींडं दारुकेशरूपिणीभ्यांनमः दारुकेशरूपिणीश्रीपा०पू०त० ॥१३॥ नैरृतपश्चिममध्ये ॐ ह्रींढं अर्धना-
रीशवीरणीभ्यांनमः अर्द्धनारीशवीरणीश्रीपा०पू०त० ॥१४॥ वायुसोममध्ये ॐ ह्रींणं उमाकांतेशकाकोदरीभ्यांनमः उमाकांतेशकाको
दरीश्रीपा०पू०त० ॥१५॥ ईशानपूर्वमध्ये ॐ ह्रींतं आषाढेशपूतनाभ्यांनमः आषाढेशपूतनाश्रीपा०पू०त० ॥१६॥ पुष्पांजलिमादाय
मूलमुच्चार्य ॥ अभिष्टसिद्धिंमे० ॥१॥ विशेषार्घबिंदुभैरवोपरिदद्यात् पूजितास्तर्पिताः संतु पूर्ववन्मुद्रांप्रदर्श्येति अष्टमावरणं ॥८॥
अथनवमावरणं ॥ भूपुरस्यतृतीयरेखायांदिग्विदिगंतरालेषुषोडशस्थानेषु दंडीश्वरादिभृग्वीशांतान् पूजयेत् ॥ तत्रपूर्वे ॐ ह्रीं थं दं-
डीशभद्रकालीभ्यांनमः दंडीशभद्रकालीश्रीपा०पू०त० ॥१॥ दक्षिणे ॐ ह्रींदं अत्रीशयोगिनीभ्यांनमः अत्रीशयोगिनीश्रीपा०पू०त०॥
२॥ पश्चिमे ॐ ह्रींधं मीनेशशंखिनीभ्यांनमः मीनेशशंखिनीश्रीपा०पू०त० ॥३॥ उत्तरे ॐ ह्रींनं मेषेशगर्जनीभ्योनमः मेषेशगर्जिनीश्रीपा०-
पू०त० ॥४॥ आग्नेयां ॐ ह्रीं पं लोहितेशकालरात्रीभ्यांनमः लोहितेशकालरात्रिश्रीपा०पू०त० ॥५॥ नैरृत्ये ॐ ह्रीं फं शिखीशकुब्जि-

॥६६॥

काभ्यांनमः शिखीशकुब्जिकाश्रीपा॰पू॰त॰ ॥६॥ वायव्ये ॐ ह्रीं वं छागलेशकपर्दिनीभ्यांनमः छागलेशकपर्दिनीश्रीपा॰पू॰त॰ ॥७॥ ईशा
न्ये ॐ ह्रीं मं द्विरंडेशवज्रिणीभ्यांनमः द्विरंडेशवज्रिणीश्रीपा॰पू॰त॰ ॥८॥ पूर्वाग्निमध्ये ॐ ह्रीं मं महाकालेशजयाभ्यांनमः महाकालेशज-
याश्रीपा॰पू॰त॰ ॥९॥ दक्षिणनैर्ऋतमध्ये ॐ ह्रीं यं त्वगात्मभ्यां बालेशसुमुखेश्वरीभ्यांनमः बालेशसुमुखेश्वरीश्रीपादुकांपू॰त॰ ॥१०॥ प-
श्चिमवायव्यमध्ये ॐ ह्रीं रं असृगात्मभ्यां भुजंगेशरेवतीभ्यांनमः भुजंगेशरेवतीश्रीपा॰पू॰त॰ ॥११॥ उत्तरेशानयोमध्ये ॐ ह्रीं लं मांसा-
त्मभ्यांपिनाकीशमाधवीभ्यांनमः पिनाकीशमाधवीश्रीपा॰पू॰त॰ ॥१२॥ आग्नेयदक्षिणमध्ये ॐ ह्रीं वं वेदात्मभ्यां खड्गीशवारुणीभ्यां
नमः खड्गीशवारुणीश्रीपा॰पू॰त॰ ॥१३॥ नैर्ऋतपश्चिममध्ये ॐ ह्रीं शं अस्थ्यात्मभ्यां बकेशवायवीभ्यांनमः बकेशवायवीश्रीपा॰पू॰त॰
॥१४॥ वायुसोममध्ये ॐ ह्रीं षं मज्जात्मभ्यांनमः श्वेतेशरक्षोवधारिणीभ्यांनमः श्वेतेशरक्षोवधारिणीश्रीपा॰पू॰त॰ ॥१५॥ ईशानपूर्व
मध्ये ॐ ह्रीं सं शुक्रात्मभ्यां भृग्वीशसहजाभ्यांनमः भृग्वीशसहजाश्रीपा॰पू॰त॰ ॥१६॥ ततोभूपुराद्बहिः दक्षिणभागे लकुलेशादित्र-
यंपूजयेत् ॐ ह्रीं हं प्राणात्मभ्यां लकुलीशलक्ष्मीभ्यांनमः लकुलीशलक्ष्मीश्रीपा॰पू॰त॰ ॥१॥ ॐ ह्रीं ळं शक्त्यात्मभ्यां शिवेशव्यापि
नीभ्यांनमः शिवेशव्यापिनीश्रीपा॰पू॰त॰ ॥२॥ ॐ ह्रीं क्षं क्रोधात्मभ्यां संवर्त्तकेशमहामायाभ्यांनमः संवर्त्तकेशमहामायाश्रीपा॰
पू॰त॰ ॥३॥ ईशानभागे ॐ ह्रीं योगिनीसहितेभ्यो दिव्ययोगीश्वरेभ्योनमः योगिनीसहितदिव्ययोगीश्वरश्रीपा॰पू॰त॰ ॥४॥
आग्नेयकोणे ॐ ह्रीं योगिनीसहितेभ्यो अंतरिक्षस्थयोगीश्वरेभ्योनमः योगिनीसहित अंतरिक्षयोगीश्वरश्रीपा॰पू॰त॰ ॥५॥ नै-
र्ऋत्यकोणे ॐ ह्रीं योगिनीसहितभूमिस्थयोगीश्वरेभ्योनमः योगिनीसहितभूमिस्थयोगीश्वरश्रीपा॰पू॰त॰ ॥६॥ पूर्वे गं गणपत-
येनमः गणपतिश्रीपा॰पू॰त॰ ॥७॥ दक्षिणे भैं भैरवायनमः भैरवश्रीपा॰पू॰त॰ ॥८॥ पश्चिमे क्षं क्षेत्रपालायनमः क्षेत्रपालश्रीपा॰
पू॰त॰ ॥९॥ उत्तरे दुं दुर्गायैनमः दुर्गाश्रीश्रीपा॰पू॰त॰ ॥१०॥ पुष्पांजलिमादाय मूलमुच्चार्य अभीष्टसिद्धिं मे देहि॰ नवमावरणा-
र्चनम् ॥ विशेषार्घबिंदु भैरवोपरिदद्यात् पूजितास्तर्पिताः संतु पूर्ववन्मुद्रा प्रदर्श्येतिनवमावरणं ॥९॥ अथदशमावरणं ॥ भूपुरा-

द्वहिः पूर्वादिदशदिक्षुइंद्रादीनपूजयेत् ॥ ॐ ह्रींलं इंद्रायनमः इंद्रश्रीपा० पू० त० ॥१॥ ॐ ह्रींरं अग्नयेनमः अग्निश्रीपादुकांपू० त० ॥२॥ ॐ ह्रीं मंयमायनमः यमश्रीपा० पू० त० ॥३॥ ॐ ह्रींक्षंनिऋतयेनमः निऋतिश्रीपा० पू० त० ॥४॥ ॐ ह्रींवंवरुणायनमः वरुणश्रीपादू० पू० त० ॥५॥ ॐ ह्रीं वायवेनमः वायुश्रीपा० पू० त० ॥६॥ ॐ ह्रींसंसोमायनमः सोमश्रीपा० पू० त० ॥ ॐ ह्रींहं ईशानाय० ईशानश्रीपा० पू० त० ॥८॥ ॐ ह्रीं आं ब्रह्मणे नमः ब्रह्मश्रीपा० पू० त० ॥९॥ ॐ ह्रींअं अनंता० अनंतश्रीपा० पू० त० ॥१०॥ पुष्पांजलिमादायमूलमुच्चार्य अभीष्टसिद्धिं० दशमावरणार्चनं ॥१॥ विशेषार्घ्यबिंदुंभैरवोपरिदद्यात् पूजितास्तर्पिताः संतुपूर्ववन्मुद्रांप्रदर्श्येति दशमावरणं ॥१०॥ **अथैकादशमावरणं** ॥ पूर्वादिक्रमेणइंद्रादि दिक्पालसमीपेस्वस्वायुधान् पूजयेत् ॥ ॐ वज्रायनमः ॐ शक्तये० ॐ दंडाय० ॐ खड्गाय० ॐ पाशाय० ॐ अंकुशा० ॐ गदायै० ॐ त्रिशूलाय० ॐ पद्मायनमः ॐ चक्रायनमः ॥१०॥ पुष्पांजलिमादायमूलमुच्चार्य अभीष्टसिद्धिंमे० रुद्राख्यावरणार्चनं ॥१॥ विशेषार्घबिंदुंभैरवोपरिदद्यात् पूजितास्तर्पिताः संतुपूर्ववन्मुद्रांप्रदर्श्येतिएकादशमावरणं ॥११॥ इति आवरणपूजा ॥ **अथगंधादिपूजनं** ॥ मूलं परमानंदसौरभ्य परिपूर्णदिगंबरं ॥ गृहाणपरमंगंधंकृपयाभैरवेश्वर ॥१॥ श्रीभैरवायगंधंस० ॥ कनिष्टिकांगुष्ठयोगेनगंधमुद्रांप्रदर्श्य ॥ मू० तुरीयवनसंभूतंनानापुष्प मनोहरं ॥ अनंतसौरभंपुष्पंगृहाणपरमेश्वर ॥१॥ श्रीभैरवायपुष्पंस० अधोमुखतर्जन्यंगुष्ठयोगेनपुष्पमुद्रांप्रदर्शयेत् ॥ मू० फडिति धूपपात्रं संप्रोक्ष्यनमइति गंधपुष्पाभ्यांसंपूज्य पुरतोनिधायरमितिबीजेनउपरि अग्निंस्थाप्यतदुपरिदशांगंदत्वाधूपंस० तर्जन्यंगुष्ठयोगेनधूपमुद्रांप्रदर्श्य वामभागेघंटांनिधायअस्त्रेणप्रोक्ष्यधेनुमुद्रयामृतीकृत्य गंधादिभिः संपूज्य ॐ जगद्ध्वनिमातःस्वाहेति घंटामंत्रेणाभिमंत्र्य गंधपुष्पाभ्यांसंपूज्य वामेनतांवादयेत् मध्यमानामिकांगुष्टै धूपंधृत्वागायत्रींमूलमंत्रंचपठन् देवस्यवामभागेधूपपात्रंस्थापयेत् ॥ ततोदीपपात्रंगोघृतेनापूर्यतत्रकर्पूर वर्त्तिनिक्षिप्यह्रीमितिप्रज्वाल्यधेनुमुद्रयामृतीकृत्यमूलमंत्रवेदोक्तमंत्रेणदीपंस० शंखजलमुत्सृज्य मध्यमांगुष्ठयोगेनदीपमुद्रांप्रदर्श्यपूर्ववत् घंटांवादयन् नेत्रादिपादपर्यंतंदीपंप्रदर्शयन् देवस्यदक्षिणभागेनिधापयेत् ॥ ततोनैवेद्यं ॥ देवस्याग्रेजलेनचतुरस्रंमंडलंकृत्वास्वर्णरौप्यादिनिर्मितंभोजन पात्रंस्थाप्यतन्मध्येषड्रसोपेतंविविधप्रकारंस्थाप्य ॐ ह्रींनमइतिमंत्रेणअर्घ्यजलेनसंप्रोक्ष्य मूलेनसंवीक्ष्य अधोमुखदक्षिणहस्तोपरि तादृशंवाम-

निधाय यमितिवायुबीजंषोडशधासंजप्यवायुनातद्गतदोषान् संशोष्य ॥ दक्षिणकरतले अग्निबीजंविचिंत्यतत्पृष्ठलग्नंवामकरतलंकृत्वा नैवेद्यंप्र
दर्श्यरमिति १६ संजप्य तदुत्पन्नाग्निनातद्दोषंदग्ध्वा ॥ वामकरतले अमृतबीजंविचिंत्य तत्पृष्ठलग्नंदक्षिणकरतलंकृत्वानैवेद्यंप्रदर्श्यवं १६ जपित्वा
तदुत्थामृतधारयाप्लावितंविभाव्य हुमित्यवगुंठ्य धेनुमुद्रांप्रदर्श्य मूलेनाष्टधाभिमंत्र्यगंधपुष्पान्निक्षिप्य वामांगुष्ठेननैवेद्यपात्रंस्पृष्ट्वा दक्षिणकरे
णजलं गृहीत्वा मूलांते तत्पात्रेसद्द्विः सौरव्यं विविधानेकभक्षणं ॥ निवेदयामिदेवेशसानुगायजुषाणतत् ॥ सांगायसपरिवारायश्रीमद्बटुकभैर-
वायनैवेद्यंसमर्पयामि ॥ इतिजलमुत्सृज्य ॥ ॐ अमृतोपस्तरणमसीस्वाहेतिदेवस्य दक्षहस्तेजलंदत्वा देवेन तज्जलं प्राशितमिति भावयन्
॥ वामहस्तेनग्रासमुद्रांप्रदर्शयन् दक्षिणहस्तेन प्राणादिपंचमुद्राः प्रदर्शयेद्यथा ॥ अंगुष्ठकनिष्ठानामाभिः ॐ प्राणायस्वाहा ॥१॥ अंगुष्ठतर्ज-
नीमध्यमाभिः ॐ अपानायस्वाहा ॥२॥ अंगुष्ठमध्यमानामाभिः ॐ व्यानायस्वाहा ॥३॥ अंगुष्ठतर्जनीमध्यमानामाभिः ॐ उदानायस्वा-
हा ॥४॥ सर्वांगुलिभिः ॐ समानायस्वाहा ॥५॥ एवंपंचमुद्राः प्रदर्श्य देवंभुक्तवंतंविभाव्य ॥ नमस्ते देवदेवेशसर्वतृप्तिकरंपरं ॥ परमानंदपूर्णत्वंगृ-
हाणजलमुत्तमं ॥१॥ सुवर्णादिपात्रस्थंकर्पूरादिसुवासितं जलंनिवेद्य अस्त्रमंत्रेणजवनीकारूपेणभोजनस्थलंसंवेष्ट्य ॥ ब्रह्मेशाद्यैः सरसम-
भितोसोपविष्टोसमंतात्सिंजद्बालव्यजननिकरैर्वीज मानोसरवाभिः ॥ नर्मक्रीडाप्रहसनपरापंक्तिभोकृन्हसंतिभुंक्ते पात्रेकनकघटितेषड्सा-
न्भैरवेशः ॥१॥ इतिदेवंध्यात्वा मूलमंत्रंयथाशक्तिजपित्वावश्यपूजांगत्वेन नित्यहोमंकुर्यात् ॥ **अथनित्यहोमः** ॥ स्वदक्षिणभागेस्वदक्षिणेह-
स्तप्रमाणंचतुरंगुलमुन्नतंचतुरस्रंस्थंडिलंकृत्वा मूलेनवीक्ष्य फडितिसंप्रोक्ष्य तेनैवहुमितिदर्भैः संताड्यकवचेन मुष्टिनासिंच्य मूलेनहोमद्रव्यंपरिसिंच्य
मूलेनाग्निंसमानीयक्रव्यादांशंनैर्ऋत्यामेकमंगारंपरित्यज्य मूलेनाग्निंस्थंडिलेसंस्थाप्यतत्रभैरवंध्यात्वागंधाद्यैः संपूज्य आज्येनव्याहृतिहुत्वा मूलेन
पंचविंशतिसंख्यया आज्येनतिलेनान्नेनवाहोमंकुर्यात् यथा ॐ भूःस्वाहा ॐ भुवःस्वाहा ॐ स्वःस्वाहा ॐ भूर्भुवःस्वःस्वाहा ॐ ह्रां हृदयायन-
मःस्वाहा ॐ ह्रीं शिरसेस्वाहा ॐ ह्रूं शिखायैवषट्स्वाहा ॐ ह्रैं कवचायहुंस्वाहा ॐ ह्रौं नेत्रत्रयायवौषट् स्वाहा ॐ ह्रः अस्त्रायफट्स्वाहा
एवंहुत्वागंधाद्यैः संपूज्य देवतापीठे मूर्त्तौसंयोज्य वह्निंविसृजेत् ॥ भोभोवह्ने महाशक्के सर्वकामप्रसाधके ॥ कर्मांतरेपिसंप्राप्ते सान्निध्यंकुरुसादरं

॥१॥ योनिमुद्रयाप्रणम्य इतिनित्यहोमविधिः ॥ **अथबलिदानं** ॥ देवस्याग्नेय्यांचतुरस्रवृत्तत्रिकोणमंडलंकृत्वातत्रसिद्धान्नंसव्यंजनोदकसहितं
पात्रंगृहीत्वातत्रसर्वभूतानिध्यात्वागंधपुष्पाभ्यांसंपूज्य ॥ ॐ येरौद्रारौद्रकर्माणोरौद्रस्थाननिवासिनः ॥ योगिभ्योप्युग्ररूपाश्चगणानामधिपाश्च-
ये ॥१॥ भूचराः खेचराश्चैवतथाचैवांतरिक्षगाः ॥ सर्वेतेप्रीतमनसोभूत्वागृह्णंत्विमंबलिं ॥२॥ इतिवामकरांगुलिभिरर्घ्यजलेनोत्सृज्यपुष्पांजलि
मादाय ॥ ॐ भूतानियानीहवसंतिभूतलेबलिंगृहीत्वाविधिवत्प्रयुक्तं ॥ संतोषमासाद्यव्रजंतुसर्वेक्षमंतुनान्यत्रनमोस्तुतेभ्यः ॥१॥ इतिपुष्पांज-
लिंदत्वाप्रणम्यविसर्जनमुद्रयाविसृज्यस्वात्मानंशुद्धजलेनसंप्रोक्ष्येतिबलिदानं ॥ ततोतृप्तंदेवंविभाव्यधेनुमुद्रयामृतीकृत्यस्वर्णादिपात्रस्थजले-
नउत्तरापोशनंदद्यादनेन ॐ अमृतापिधानमसीस्वाहेतिदक्षहस्तेजलंदत्वा ततोनैवेद्यपात्रंनैरृत्यांस्थाप्यगतसारंनैवेद्यंकिंचिदुद्धृत्य ॥ ॐ
चंडेश्वर्यैनमइतिदेवस्योच्छिष्टभागःईशान्यांदिशिदद्यात् ततोस्त्रमंत्रेणतत्स्थानंप्रोक्ष्यप्रोक्षणादिभिः संशोध्य ॥ हस्तमुखप्रक्षालनार्थंजलं
करोद्वर्तनार्थंसुगंधीचूर्णंदत्वा गंडूषांकारयित्वाकर्पूरैकदलैर्दंतधावनंपरिकल्प्य पुनर्गंडूषार्थंजलंदत्वादेवस्यचरणक्षालनंकृत्वामूलेनशुद्धाच
मनंदत्वा ॥ **ततोतांबूलं** ॥ पूगीफलंमहद्दिव्यंनागवल्लिदलान्वितं ॥ कर्पूरादिसमायुक्तंतांबूलंप्रतिगृह्यतां ॥१॥ मू॰ तांबूलंस॰ ॥ मू॰ दक्षिणां
स॰ ॥ मू॰ छत्रचामरादीन्स॰ ॥ ततोआरार्त्तिकंकुर्यात् ॥ शालिगोधूमपिष्टेनसगुडजीरकेणचत्रिकोणाकारंमंडूकरूपंवानवदीपान्कृत्वा
घृतेनपाचयित्वास्वर्णादिपात्रेचंदनेनाष्टदलंत्रिकोणंमंडलंकृत्वा मूलेनसंप्रोक्ष्यअष्टदलेअष्टदीपान्त्रिकोणेमध्येएकंदीपंएवंनवदीपान्संस्था-
प्यघृतेनापूर्यकर्पूरादिवर्त्तिनिक्षिप्य मायाबीजेनप्रज्वाल्यचक्रमुद्राप्रदर्श्य धेनुमुद्रयामृतीकृत्य मूलेनारार्त्तिकंसंपूज्य मूलेनदेवोपरिनेत्रादि-
पादपर्यंतंनववारंत्रिवारंवाभ्रामयेत् घंटान्नादयेत् तत्रमंत्राः अंतस्तेजोबहिस्तेजोएकीकृत्यनिरंतरं ॥ त्रिधादेवोपरिभ्राम्यकुलदीपंनिवेदयेत् ॥
१॥ चंद्रादित्यौचधरणीविद्युदग्निस्तथैवच ॥ त्वामेवसर्वज्योतिस्त्वांआर्त्तिक्यंप्रतिगृह्यतां ॥२॥ अग्निर्देवता॰ मू॰ निरांजनंस॰ ॥ यज्ञेनयज्ञ॰
मू॰ पुष्पांजलिंस॰ मंत्रपुष्पांजलिकरणानंतरंसुवासिन्यादिपूजनंतथाचजपस्तोत्रपाठादिकृत्वापश्चात्क्षमापनादिकांतंकार्यइत्येवमपिपक्षः ॥
**अथक्षमापनं** ॥ ज्ञानतोज्ञानतोवाथयन्मयाक्रियतेशिव ॥ ममकृत्यमिदंसर्वमितिदेवक्षमस्वमे ॥१॥ अपराधसहस्राणिक्रियंतेहर्निशंमया ॥

दासोहमितिमांमत्वाक्षमस्वपरमेश्वर ॥२॥ अपराधोभवत्येवसेवकस्यपदेपदे ॥ कोपरः सहतांलोकेकेवलंस्वामिनंविना ॥ ३ ॥भूमौस्खलि-
तपादानांभूमिरेवाबलंवनं ॥त्वयिजातापराधानांत्वमेवशरणःशिव ॥४॥ इतिबद्धांजलिपूर्वकंक्षमाप्य ॥अर्घोदकेनचुलकमादाय ॥ ॐइ-
तःपूर्वप्राणबुद्धिदेहधर्माधिकारतः जाग्रत्स्वप्नसुषुप्तितुर्यावस्थासुमनसावाचाकर्मणाहस्ताभ्यांपद्भ्यामुदरेणशिश्नायत्स्मृतंयदुक्तंयत्कृतंतत्
सर्वंब्रह्मार्पणंभवतुस्वाहा ॥मांमदीयंचसकलंश्रीमद्बटुकभैरवदेवतायैसमर्पयामिनमः ॥ ॐतत्सदितिब्रह्मार्पणंभवतुइतिमंत्रेणआत्मा-
नंसमर्प्य ॥ ततोकृतांजलिःप्रार्थयेत् ॥ यदुक्तंयदिभावेनपत्रंपुष्पंफलंजलं ॥ निवेदितंचनैवेद्यंगृहाणअनुकंपया ॥१॥ आवाहनंनजाना-
मिनजानामिविसर्जनं ॥ पूजाभागंनजानामित्वंगतिःपरमेश्वर ॥२॥ कर्मणामनसावाचात्वत्तोनान्यागतिर्मम ॥ अंतश्चरेणभूतानिइष्ट
स्त्वंपरमेश्वर ॥३॥ प्रातर्योनिसहस्त्रेषुसहस्त्रेषुव्रजाम्यहं ॥ तेषुचेष्टाचलाभक्तिरच्युतेस्तुसदात्वयि ॥४॥ देवोदाताचभक्ताचदेवरूपमिदं-
जगत् ॥ देवंजपतिसर्वत्रयोदेवःसोहमेवहि ॥५॥ यदक्षरपदभ्रष्टंमात्राहीनंचयद्भवेत् ॥ क्षंतुमर्हसिदेवेशकस्यतत्स्खलितंमम ॥६॥
क्षमस्वदेवदेवेशगम्यतेभुवनेश्वर ॥ तवपादांबुजेनित्यंनिश्चलाभक्तिरस्तुमे ॥७॥ इतिप्रार्थ्यस्वयोनिमुद्रयाप्रणमेत् ॥ ततःशंखमुद्धृत्यदेवोप-
रिभ्रामयित्वा ॥ साधुवासाधुवाकर्मयद्यदाचरितंमया ॥तत्सर्वंकृपयादेवगृहाणाराधनंमम ॥ १॥ इत्युच्चरन्देवस्यदक्षिणहस्तेकिंचिज्ज-
लंदत्वा ॥प्राग्वदर्घ्यंदेवशिरसिदत्वाशंखंयथास्थानेनिवेश्यतज्जलंकिंचिद्वामहस्तेनिधाय ॥तस्मिन्पूजावशिष्टंकिंचिद्गंधमाल्याग्रमूल
मुच्चार्यतेनजलेनात्मानंप्रोक्ष्य अन्यानपिसामयिकान्तेनैवप्रोक्षयेत् ॥इतिसपीठयंत्रोपरिवामूर्त्तौभैरवपूजा ॥ ततःस्ववामभागेसुवासि-
नीपूजांकुमारिकापूजांबटुकपूजांकुर्यात् ॥स्वदक्षिणभागेचतुष्टयगुरुपादुकांपूर्ववत्पूजयेत् ॥ ततोजपमालामानीयकचित्पात्रेवामहस्तेन
आच्छाद्यमूलेनार्घ्योदकेनाभ्युक्ष्य ॥ ॐ मां मालेमहामालेसर्वशक्तिस्वरूपिणी ॥ चतुर्वर्गस्त्वयिन्यस्तस्तस्मात्त्वंसिद्धिदाभव ॥ १॥ इत्य-
नेनगंधपुष्पाभ्यांसंपूज्य ॥ ॐ गं अविघ्नंकुरुमालेत्वंसर्वकार्येषुसर्वदा ॥इतिमंत्रेणदक्षिणहस्तेनादायशिरसिगुरुंकंठेमंत्रंपीतवर्णंहृदि
स्वेष्टदेवतांध्यायन् हृदयसमीपेमालामानीयदक्षिणहस्तमध्यमांगुलिमध्यपर्वणिसंस्थाप्य ज्येष्ठाग्रेणभ्रामयित्वाएकाग्रचित्तोयथाशक्त्या

मूलमंत्रंजपेत् ॥ जपांते ॥ ॐत्वंमालेसर्वदेवानांप्रीतिदाशुभदाममः ॥ शुभंकुरुष्वमेभद्रे यशोवीर्यंचदेहिमे ॥ १ ॥ ह्रींसिध्यैनमः इत्यनेनमं-
त्रेणमालांस्वशिरसिसंस्थाप्यप्राणायामत्रयं ऋष्यादिकरषडंगंविधायदेवस्यवामहस्ते अर्घोदकेन गुह्येतिमंत्रेणजपंसमर्प्य देवाय पुष्पांज-
लिंनिक्षिप्यततोह्रींसिध्यैनमइतिपंचाक्षरेणपुनर्मालांसंपूज्ययथास्थानेस्थापयेत् ॥ ततः कवचस्तोत्रसहस्रनामादिकंपठित्वा ॥ यथावि-
धिपश्चात्पात्रवंदनंकुर्यात् ॥ ॥ अथदेवविसर्जनंस्वहृदयमध्येस्थापनं ॥ एवंस्तोत्रपाठकरणानंतरंपरिवारगणाः देवस्यदेहेविलीनाः वि-
भाव्यपरंदेवरूपमात्मानंध्यात्वामूलविद्यांतेश्रीमद्बटुकभैरवक्षमस्वेतितालत्रयेणदेवंप्रतिबोध्यतेजोमयंविभाव्य गच्छगच्छ परस्थानेस्वस्था-
नेपरमेश्वर ॥ यंहिब्रह्मादयोदेवाः नविदुः परमंपदं ॥ इत्युच्चार्यतेजोरूपंतंसंहारमुद्रयानिर्माल्यपुष्पेणतत्तेजः समुद्धृत्य आघ्रायपूरक
योगेनशिरसिसहस्रदलकमलंप्रापयेत्तत्रक्षणंतेजोरूपंध्यात्वा ॥ सुषुम्णावर्त्मना ॐ हृदयायनमः इतिहृदयकमलमानीयतत्रयथो-
क्तंरूपंध्यात्वा ॥ ॐ तिष्ठतिष्ठ परस्थानेस्वस्थानेपरमेश्वर ॥ यत्रब्रह्मादयोदेवासर्वेतिष्ठंतिमेहृदि ॥ इतिहृदयकमलेस्थापयित्वामा-
नसोपचारैः संपूज्य पुनस्तेजोरूपंकुंडलिनीरूपेणमूलादिब्रह्मरंध्रांतंध्यात्वामूलाधारेस्थापयेत् ॥ एतदिशान्यांजलेनत्रिकोणवृत्तचतुरस्रमं
डलंकृत्वातत्रनिर्माल्यवाहिनींदेवींनिर्माल्येनसंपूज्यप्रणमेत् ॥ ततोदेवनाथगुरोस्वामिन् देशिकस्वात्मनायिके ॥ त्राहिमांकृपयासिंधोपूजांपूर्णतरांकुरु
॥ १ ॥ इतिगुरुंसंप्रार्थ्य ॥ कराभ्यांविशेषार्घ्यमादायआमस्तकमुद्धृत्यशिरसिस्थितायश्रीगुरवेसमर्प्य ॥ तत्पात्रंदक्षिणकरतलेनिधायवामांगुष्ठा-
नामिकाभ्यांशिरसिगुरुपादुकाभ्यांत्रिः संतर्प्य तत्पात्रंयथास्थानेनिवेशयेत् ॥ तत्रविशेषार्घजलंकिंचित्पात्रांतरेणादाय ॐ ह्रीं २१ आत्मतत्वंशो
धयामिस्वाहा ॥ ॐ २१ विद्यातत्वंशोधयामिस्वाहा ॥ ॐ २१ शिवतत्वंशोधयामिस्वाहा ॥ ॐ ह्रीं २१ सर्वतत्वंशोधयामिस्वाहा ॥ इतिचतु-
र्भिर्मंत्रैश्चुलकचतुष्टयंस्विकारंशोधयामिस्वाहेतिजलंस्वपात्रेकृत्वातत्रविशेषार्घजलंकिंचिद्दत्वातत्पात्रंकराभ्यामादायमूलमूच्चार्य गुरुपादु-
कास्मरणपूर्वकंप्रकाशामर्षहस्ताभ्यांव्योन्मनीस्रुचा ॥ धर्माधर्मकलास्नेहंपूर्णवह्निजुहोम्यहं ॥ इत्युच्चार्यतज्जलंप्राश्नीयात् ॥ ततः स्व-
वामकानूयथाशास्त्रंयथागुरूपदेशंसंभाव्यतेषुपरितुष्टेषुबलिविसर्जनंकुर्यात् ॥ यथा ॥ पूर्वस्थापितबलिपात्रस्थमन्नमेकपात्रेकृत्वा पूजा-

गृहाद्बहिः पूर्ववन्मंडलं कृत्वा तत्र दद्यात् यथा गदात्रिशूलडमरुपात्रहस्तं त्रिलोचनं ॥ कृष्णाभं भैरवं ध्यायेत्सर्वविघ्ननिवारणं ॥१॥ एवं ध्या-
त्वा दद्यात् ॥ उच्छिष्टभैरव एह्येहि बलिं गृह्ण २ हुं फट् स्वाहेति तदन्नं तत्र विसृज्य ॥ तत्पात्रं प्रक्षाल्य विशेषार्घ्यबिंदुं भैरवोपरि दत्वा ॥ तेनोदके-
न स्वसामयिकान् अभिषिंच्य शुद्धजलेनापूर्य ततः शांतिस्तोत्रं पठेत् ॥ यथा ॥ नश्यंतु प्रेतकूष्मांडा नश्यंतु दूषकाः नराः ॥ साधकानां शिवाः
संतु स्वाम्नायपरिपालनां ॥१॥ जयंतु मातरः सर्वा जयंतु योगिनीगणाः ॥ जयंतु सिद्धडाकिन्यो जयंतु गुरुशक्तयः ॥२॥ नंदंतु अणिमासि-
द्धा नश्यंतु भैरवादयः ॥ नंदंतु भैरवाः सर्वे सिद्धविद्याधरादयः ॥३॥ येचाम्नायविशुद्धाश्च मंत्रिणः शुद्धबुद्धयः ॥ सर्वदानंदयानंदं नंदंतु कु-
लपालकाः ॥४॥ इंद्राद्यास्तर्पिताः संतु तृप्यंतु वास्तुदेवताः ॥ चंद्रसूर्यदयो देवास्तृप्यंतु गुरुभक्तितः ॥५॥ नक्षत्राणि गृहा योगाः कर-
णाद्यास्तथापरे ॥ ते सर्वे सुखिनो यांतु मासाश्च तिथयस्तथा ॥६॥ तृप्यंतु पितरः सर्वे ऋतवो वत्सरादयः ॥ खेचरा भूचराश्चैव तृप्यंतु-
मम भक्तितः ॥७॥ अंतरिक्षचरा घोरा येचान्ये देवयोनयः ॥ सर्वे तु सुखिनो यांतु सर्वा नद्यश्च पक्षिणः ॥८॥ पर्वतास्तत्रयस्यैव पर्वताः
कंदरा गुहाः ॥ ऋषयो ब्राह्मणाः सर्वे शांतिं कुर्वंतु मे सदा ॥९॥ तीर्थानि पशवो गावो येचान्ये पुण्यभूमयः ॥ वृद्धाः पतिव्रता नार्याः शिवं
कुर्वंतु मे सदा ॥१०॥ शिवं सर्वत्र मे चास्तु पुत्रदारधनादिषु ॥ राजानः सुखिनः संतु क्षेमं मार्गे तु मे सदा ॥११॥ शुभा मे दिवसा यांतु-
शिवास्तिष्टंतु मे शिवाः ॥ द्वेष्टारः साधकानां च सदैवाम्नायदूषकाः ॥१२॥ डाकिनीनां मुखे यांतु तृप्तास्तृप्तास्तु ते सुताः ॥ शत्रवो नाश-
मा यांतु मम निंदाकराः सदा ॥१३॥ येनिंदकास्ते विपदं प्रयांतु ये साधकास्ते प्रभवंतु सिद्धाः ॥ येसर्ववीरकरुणावलोका पुनः परेशममसन्निधत्त
॥१४॥ इति रुद्रयामलोक्तं शांतिस्तवं पठित्वा ॥ ततो मूलविद्यया प्राणायामं कृत्वा ऋष्यादिकरषडंगन्यासांश्च कृत्वा ॥ श्रीगुरुं प्रणम्य ॥
मूलेन निर्माल्यं शिरसि धृत्वा नैवेद्यादिकं देवभक्तेषु विभज्य स्वयं भुत्का ॥ स्वात्मानं देवरूपं भावयन् ॥ यथासुखं विहरेत् ॥ ॥
॥ इति श्रीह॰ बृ॰ ध॰ उपा॰ स्त॰ श्रीमद्बटुकोपा॰ श्रीबटुकभैरवपद्धतिनिरूपणं नाम प्रकरणम् ॥ ॥ श्लो॰ ॥

गृहाद्बहिः पूर्ववन्मंडलं कृत्वातत्रदद्यात् यथा गदात्रिशूलडमरुपात्रहस्तंत्रिलोचनं ॥ कृष्णाभं भैरवंध्यायेत्सर्वविघ्ननिवारणं ॥१॥ एवंध्या-
त्वादद्यात् ॥ उच्छिष्टभैरव एह्येहिबलिंगृह्ण २ हुंफट् स्वाहेतितदन्नंतत्रविसृज्य ॥ तत्पात्रंप्रक्षाल्य विशेषार्घ्यबिंदुं भैरवोपरिदत्वा ॥ तेनोदके-
नस्वसामयिकान् अभिषिंच्यशुद्धजलेनापूर्यततः शांतिस्तोत्रंपठेत् ॥ यथा ॥ नश्यंतु प्रेतकूष्मांडानश्यंतुदूषकाः नराः ॥ साधकानांशिवाः
संतुस्वाम्नायपरिपालनां ॥१॥ जयंतुमातरः सर्वाजयंतु योगिनीगणाः ॥ जयंतुसिद्धडाकिन्योजयंतुगुरुशक्तयः ॥ २ ॥ नंदंतु अणिमासि-
द्धानश्यंतुभैरवादयः ॥ नंदंतुभैरवाःसर्वेसिद्धविद्याधरादयः ॥ ३ ॥ येचाम्नायविशुद्धाश्चमंत्रिणः शुद्धबुद्धयः ॥ सर्वदानंदयानंदंनंदंतुकु-
लपालकाः ॥ ४ ॥ इंद्राद्यास्तर्पिताः संतुतृप्यंतुवास्तुदेवताः ॥ चंद्रसूर्यैदयोदेवास्तृप्यंतु गुरुभक्तितः ॥ ५ ॥ नक्षत्राणिगृहायोगाः कर-
णाद्यास्तथापरे ॥ तेसर्वे सुखिनोयांतुमासाश्चतिथयस्तथा ॥ ६ ॥ तृप्यंतुपितरः सर्वेऋतवोवत्सरादयः ॥ खेचराभूचराश्चैव तृप्यंतु-
ममभक्तितः ॥ ७ ॥ अंतरिक्षचराघोरायेचान्येदेवयोनयः ॥ सर्वेतुसुखिनोयांतुसर्वानद्यश्चपक्षिणः ॥८॥ पर्वतास्तत्रयस्यैव पर्वताः
कंदरागुहाः ॥ ऋषयोबाह्मणाः सर्वेशांतिंकुर्वंतुमेसदा ॥९॥ तीर्थानि पशवोगावोयेचान्येपुण्यभूमयः ॥ वृद्धाः पतिव्रतानार्याशिवं
कुर्वंतुमेसदा ॥ १० ॥ शिवंसर्वत्रमेचास्तुपुत्रदारधनादिषु ॥ राजानः सुखिनः संतुक्षेममार्गेतुमेसदा ॥ ११ ॥ शुभामेदिवसायांतु-
शिवास्तिष्टंतुमेशिवाः ॥ द्वेष्टारः साधकानांचसदैवाम्नायदूषकाः ॥१२॥ डाकिनीनांमुखेयांतुतृप्तास्तृप्तास्तुतेसुताः ॥ शत्रवोनाश-
मायांतुममनिंदाकराः सदा ॥ १३ ॥ येनिंदकास्तेविपदं प्रयांतुयेसाधकास्तेप्रभवंतुसिद्धाः ॥ येसर्ववीरकरुणावलोकापुनः परेशममसन्निधत्त
॥१४॥ इतिरुद्रयामलोक्तंशांतिस्तवंपठित्वा ॥ ततोमूलविद्ययाप्राणायामंकृत्वाऋष्यादिकरषडंगन्यासांश्चकृत्वा ॥ श्रीगुरुंप्रणम्य ॥
मूलेननिर्माल्यंशिरसिधृत्वानैवेद्यादिकंदेवभक्तेषुविभज्यस्वयंभुक्त्वा ॥ स्वात्मानंदेवरूपंभावयन् ॥ यथासुखंविहरेत् ॥ ॥

**॥ इतिश्रीह॰ बृ॰ध॰उपा॰स्त॰ श्रीमद्बटुकोपा॰ श्रीबटुकभैरवपद्धतिनिरूपणंनामप्रकरणम् ॥ ॥ श्लो॰ ॥**

बेषुनचमे ॥ यदायद्यद्भाव्यंभवतुभगवन् पूर्वसुकृता ॥ स्समैतन्नुप्रार्थ्यंतवविमल[१६]भक्तिः प्रभवतात् ॥९॥[१७] कियाँस्तेस्मद्भारः पति-
तपतितान्स्तारयसिभो ॥ मदन्यः कः पापीयजनविमुखः पाठरहितः ॥ द्द्दोमेविश्वासस्तवनियतिरुद्धारविषया ॥ सदास्याद्द्दि[१८]
श्रम्भः क्वचिदपिमृषामाचभवतात् ॥१०॥ भवद्भावाद्भिन्नोव्यसननिरतः कोमदपरो ॥ मदान्धःपापात्माबटुकशिवतेनामरहितः ॥ उदारा
त्मनूबन्धोनहितवकतुल्यःकलुषहा ॥ पुनस्साश्चिन्त्यैवंकुरुहृदियथाचेच्छसितथा ॥११॥ जपान्तेस्नानान्तेह्युषसिचनिशीथेपठति-
यो ॥ महासौख्यंदेवोनुवितरतितस्मैप्रमुदितः ॥ अहोरात्रंपार्श्वेपरिवसतिभक्तानुगमनो ॥ वयोन्तेसंहृष्टः परिनयतिभक्तान्स्वभुवनम्
॥१२॥ ॥ इतिश्रीसिद्धयोगीश्वरश्रीघनेयालशिष्येणात्मारामेणविरचितंश्रीबटुकप्रार्थना पराधक्षमास्तोत्रंसमाप्तम् ॥६॥

## ॥ अथग्रंथालंकारः प्रारंभः ॥

श्रीमद्वाजसनेयगौतमकुलोत्पन्नोतिविद्यावतां मान्योगुर्जरपंडितोपपदकौदीच्यः सहस्राह्वकः ॥ ज्योतिःशास्त्रविशारदोतिमतिमा-
ञ्छ्रीव्यंकटाख्योद्विजस्तज्जोवैहरिकृष्णसंज्ञकइमं चक्रेविदांप्रीतये ॥१॥ दक्षिणेसुमहाराष्ट्रदेशेदेवगिरेःपुरः ॥ औरंगाबान-
गरंचास्तितत्रजनिर्मम ॥२॥ प्रार्थयेसर्वविदुषांक्षमध्वंमेपराधकं ॥ यद्यत्रकुकृतंवास्यादधिकंयत्रकुत्रचित् ॥३॥ रोषत्सृ
ज्यतत्सर्वनिर्मलंकुरुतादरात् ॥ अत्रावशिष्टोयोभागः सतुशेषेभविष्यति ॥४॥ श्रीबटुकभास्करग्रंथांतर्गतविशेषपदार्थः
स्तोत्रभाष्यादिकंच उपासनाशेषग्रंथेपरिशिष्टेवक्ष्यामि ॥ ॥ इतिश्रीमत्ज्योतिर्वित्कुलावतंसव्यंकटरामात्मजहरिकृष्णवि-
निर्मितेबृहज्ज्योतिषार्णवेऽष्टमेधर्मस्कंधेतृतीयेउपासनास्तबकेश्रीबटुकभैरवोपासनानिरूपणंनामचतुर्विंशत्यधिकशततमो
ध्यायः १२४ ॥ समाप्तः ॥ ॥ अथाग्रेस्वर्णाकर्षणभैरवोपासनाध्यायोभविष्यति ॥ ॥ ॥

१६ विमलभक्तिः सात्विकभक्तिः १७ नियतिर्नियमे दैवे इतिविश्वः १८ परोपकारकारक हे मित्र.

॥ ॐ बटुकायनमः ॥ ॥ गुरोः सेवांत्यक्त्वागुरुवचनशक्तोपिनभवे ॥ भवत्पूजाध्याना[1]ज्जपहवनयागा[2]दिरहितः ॥ न-
दर्चानिर्म्माणेक्कचिदपिनयत्नंचकृतवान् ॥ जगज्जालग्रस्तोझटितिकुरुहार्[3]दंमयिविभो ॥ १ ॥ प्रभोदुर्गासूनोतवश-
णतांसोधिगतवान् ॥ कृपालोदुःखार्तःकमपिभवदन्यंप्रकथये ॥ सुहृत्सम्पत्तेहं सरल[4]विरलः[5] साधकजन ॥ सद-
न्यः कस्त्राताभवदहनदाहंशमयति ॥ २ ॥ वदान्योमान्यस्त्वंविधनजनपालोभवासिवै ॥ दयालुर्दीनार्तान् भवजलधे
पारंगमयसि ॥ अतस्त्वत्तोयाचेनतिनियमतोऽकिञ्चनधनः ॥ सदाभूयाद्भावः पदनलिनयोस्तेतिमरहा ॥ ३ ॥ अग-
पूर्वोविप्रोमिलपदपरोयोतिपतितो ॥ महामूर्खोदुष्टोवृजननिरतः पामरनृपः ॥ असत्यानासक्तोयवनयुवतीव्रातरमणः ॥
प्रभावात्त्वन्नाम्नः परमपदवींसोप्यधिगतः ॥ ४ ॥ दयादीर्घादीनेबटुककुरुविश्वम्भरमयि ॥ नचान्यस्सन्त्राता परमशो-
वमांपालयविभो ॥ महाश्चर्य्यंप्राप्तस्तवसरल दृष्ट्याविरहितः ॥ कृपापूर्णैर्नेत्रैः कजदलनिभैर्मारिवचयतात् ॥ ५ ॥
स[12]हस्येकिंहंसोनहितपतिदीनंजनचयं ॥ घनान्ते[13]किंचन्द्रोऽसमकरनिपातोभुवितले ॥ कृपादृष्टेस्तेहं भयहरविभोकिंर-
हितो ॥ जलेवाहम्र्येवाघनरसमुपातोनविषमः ॥ ६ ॥ त्रिमूर्त्तिस्त्वंगीतोहरिहरविधातात्[14]मकगुणो ॥ निराकारः शुद्धः परात्-
परः सोप्यविषयः ॥ दयारूपंशान्तंमुनिगणनुतंभक्तदयितं ॥ कदापश्यामित्वांकुटिलकचशोभित्रिनयनम् ॥ ७ ॥ तपंयो-
गसाङ्ख्यंयमनियमचेतःप्रयजनं ॥ नकौलार्चाचक्रं हरिहरविधीनांप्रियतमम् ॥ नजानेतेभक्तिं परममुनिमार्गंमधुविधिं[15] ॥
तथाप्येषावाणीपरिरटतिनित्यंतवयशः ॥ ८ ॥ नमेकाङ्क्षाधर्म्येनवसुनिचयेराज्यनिवहे ॥ नमेस्त्रीणांभोगेसखिसुतकुटु

१ स्थूलध्यानात् २ ब्राह्मणभोजनयज्ञात् ३ हेसदासहायकमित्र ४ निष्कपटः ५ एकाकी ६ तेउपासकः ७ वदान्योदानशूरः ८ महत्तरां ९ उदारदृष्ट्या १० कमलपत्रनिभैः
११ पवित्रीकुरुतात् खचपवित्रीकरणे धातुः १२ पौषे १३ शरदी १४ हर्य्यादीनांस्वभावगुणः प्रयलगुणोवा उत्पत्तिस्थिति विनाशकः १५ मदिराविधानं.